# महाभारत - सौप्तिक पर्व

# ॥ महाभारत सौप्तिकपर्व ॥

## सौप्तिकपर्व

## कौशिकदर्शनम्

## अध्याय ००१

सञ्जय उवाच ॥

ततस्ते सहिता वीराः प्रयाता दक्षिणामुखाः ।
उपास्तमयवेलायां शिबिराभ्याशमागताः ॥ ००१ ॥

विमुच्य वाहांस्त्वरिता भीताः समभवंस्तदा ।
गहनं देशमासाद्य प्रच्छन्ना न्यविशन्त ते ॥ ००२ ॥

सेनानिवेशमभितो नातिदूरमवस्थिताः ।
निकृत्ता निशितैः शस्त्रैः समन्तात्क्षतविक्षताः ॥ ००३ ॥

दीर्घमुष्णं च निःश्वस्य पाण्डवानन्वचिन्तयन् ।
श्रुत्वा च निनदं घोरं पाण्डवानां जयैषिणाम् ॥ ००४ ॥

अनुसारभयाद्भीताः प्राङ्मुखाः प्राद्रवन्पुनः ।

ते मुहूर्तं ततो गत्वा श्रान्तवाहाः पिपासिताः ॥ ००५ ॥

नामृष्यन्त महेष्वासाः क्रोधामर्षवशं गताः ।
राज्ञो वधेन संतप्ता मुहूर्तं समवस्थिताः ॥ ००६ ॥

धृतराष्ट्र उवाच ॥

अश्रद्धेयमिदं कर्म कृतं भीमेन सञ्जय ।
यत्स नागायुतप्राणः पुत्रो मम निपातितः ॥ ००७ ॥

अवध्यः सर्वभूतानां वज्रसंहननो युवा ।
पाण्डवैः समरे पुत्रो निहतो मम सञ्जय ॥ ००८ ॥

न दिष्टमभ्यतिक्रान्तुं शक्यं गावल्गणे नरैः ।
यत्समेत्य रणे पार्थैः पुत्रो मम निपातितः ॥ ००९ ॥

अद्रिसारमयं नूनं हृदयं मम सञ्जय ।
हतं पुत्रशतं श्रुत्वा यन्न दीर्णं सहस्रधा ॥ ०१० ॥

कथं हि वृद्धमिथुनं हतपुत्रं भविष्यति ।
न ह्यहं पाण्डवेयस्य विषये वस्तुमुत्सहे ॥ ०११ ॥

कथं राज्ञः पिता भूत्वा स्वयं राजा च सञ्जय ।
प्रेष्यभूतः प्रवर्तेयं पाण्डवेयस्य शासनात् ॥ ०१२ ॥

आज्ञाप्य पृथिवीं सर्वां स्थित्वा मूर्ध्नि च सञ्जय ।
कथमद्य भविष्यामि प्रेष्यभूतो दुरन्तकृत् ॥ ०१३ ॥

कथं भीमस्य वाक्यानि श्रोतुं शक्ष्यामि सञ्जय ।
येन पुत्रशतं पूर्णमेकेन निहतं मम ॥ ०१४ ॥

कृतं सत्यं वचस्तस्य विदुरस्य महात्मनः ।
अकुर्वता वचस्तेन मम पुत्रेण सञ्जय ॥ ०१५ ॥

अधर्मेण हते तात पुत्रे दुर्योधने मम ।
कृतवर्मा कृपो द्रौणिः किमकुर्वत सञ्जय ॥ ०१६ ॥

सञ्जय उवाच ॥

गत्वा तु तावका राजन्नातिदूरमवस्थिताः ।
अपश्यन्त वनं घोरं नानाद्रुमलताकुलम् ॥ ०१७ ॥

ते मुहूर्तं तु विश्रम्य लब्धतोयैर्हयोत्तमैः ।
सूर्यास्तमयवेलायामासेदुः सुमहद्वनम् ॥ ०१८ ॥

नानामृगगणैर्जुष्टं नानापक्षिसमाकुलम् ।
नानाद्रुमलताच्छन्नं नानाव्यालनिषेवितम् ॥ ०१९ ॥

नानातोयसमाकीर्णं तडागैरुपशोभितम् ।
पद्मिनीशतसंछन्नं नीलोत्पलसमायुतम् ॥ ०२० ॥

प्रविश्य तद्वनं घोरं वीक्षमाणाः समन्ततः ।
शाखासहस्रसंछन्नं न्यग्रोधं ददृशुस्ततः ॥ ०२१ ॥

उपेत्य तु तदा राजन्न्यग्रोधं ते महारथाः ।
ददृशुर्द्विपदां श्रेष्ठाः श्रेष्ठं तं वै वनस्पतिम् ॥ ०२२ ॥

तेऽवतीर्य रथेभ्यस्तु विप्रमुच्य च वाजिनः ।
उपस्पृश्य यथान्यायं संध्यामन्वासत प्रभो ॥ ०२३ ॥

ततोऽस्तं पर्वतश्रेष्ठमनुप्राप्ते दिवाकरे ।
सर्वस्य जगतो धात्री शर्वरी समपद्यत ॥ ०२४ ॥

ग्रहनक्षत्रताराभिः प्रकीर्णाभिरलङ्कृतम् ।
नभोंऽशुकमिवाभाति प्रेक्षणीयं समन्ततः ॥ ०२५ ॥

ईषच्चापि प्रवल्गन्ति ये सत्त्वा रात्रिचारिणः ।
दिवाचराश्च ये सत्त्वास्ते निद्रावशमागताः ॥ ०२६ ॥

रात्रिञ्चराणां सत्त्वानां निनादोऽभूत्सुदारुणः ।
क्रव्यादाश्च प्रमुदिता घोरा प्राप्ता च शर्वरी ॥ ०२७ ॥

तस्मिन्रात्रिमुखे घोरे दुःखशोकसमन्विताः ।
कृतवर्मा कृपो द्रौणिरुपोपविविशुः समम् ॥ ०२८ ॥

तत्रोपविष्टाः शोचन्तो न्यग्रोधस्य समन्ततः ।
तमेवार्थमतिक्रान्तं कुरुपाण्डवयोः क्षयम् ॥ ०२९ ॥

निद्रया च परीताङ्गा निषेदुर्धरणीतले ।
श्रमेण सुदृढं युक्ता विक्षता विविधैः शरैः ॥ ०३० ॥

ततो निद्रावशं प्राप्तौ कृपभोजौ महारथौ ।
सुखोचितावदुःखार्हौ निषण्णौ धरणीतले ॥ ०३१ ॥

तौ तु सुप्तौ महाराज श्रमशोकसमन्वितौ ॥ ०३१ ॥

क्रोधामर्षवशं प्राप्तो द्रोणपुत्रस्तु भारत ।
नैव स्म स जगामाथ निद्रां सर्प इव श्वसन् ॥ ०३२ ॥

न लेभे स तु निद्रां वै दह्यमानोऽतिमन्युना ।
वीक्षां चक्रे महाबाहुस्तद्वनं घोरदर्शनम् ॥ ०३३ ॥

वीक्षमाणो वनोद्देशं नानासत्त्वैर्निषेवितम् ।

अपश्यत महाबाहुर्न्यग्रोधं वायसायुतम्  ॥ ०३४  ॥

तत्र काकसहस्राणि तां निशां पर्यणामयन् ।
सुखं स्वपन्तः कौरव्य पृथक्पृथगपाश्रयाः  ॥ ०३५  ॥

सुप्तेषु तेषु काकेषु विस्रब्धेषु समन्ततः ।
सोऽपश्यत्सहसायान्तमुलूकं घोरदर्शनम्  ॥ ०३६  ॥

महास्वनं महाकायं हर्यक्षं बभ्रुपिङ्गलम् ।
सुदीर्घघोणानखरं सुपर्णमिव वेगिनम्  ॥ ०३७  ॥

सोऽथ शब्दं मृदुं कृत्वा लीयमान इवाण्डजः ।
न्यग्रोधस्य ततः शाखां प्रार्थयामास भारत  ॥ ०३८  ॥

संनिपत्य तु शाखायां न्यग्रोधस्य विहङ्गमः ।
सुप्ताञ्जघान सुबहून्वायसान्वायसान्तकः  ॥ ०३९  ॥

केषाञ्चिदच्छिनत्पक्षाञ्शिरांसि च चकर्त ह ।
चरणांश्चैव केषाञ्चिद्बभञ्ज चरणायुधः  ॥ ०४०  ॥

क्षणेनाहन्स बलवान्येऽस्य दृष्टिपथे स्थिताः ।
तेषां शरीरावयवैः शरीरैश्च विशां पते  ॥ ०४१  ॥

न्यग्रोधमण्डलं सर्वं संछन्नं सर्वतोऽभवत्  ॥ ०४१  ॥

तांस्तु हत्वा ततः काकान्कौशिको मुदितोऽभवत् ।
प्रतिकृत्य यथाकामं शत्रूणां शत्रुसूदनः  ॥ ०४२  ॥

तद्दृष्ट्वा सोपधं कर्म कौशिकेन कृतं निशि ।
तद्भावकृतसङ्कल्पो द्रौणिरेको व्यचिन्तयत्  ॥ ०४३  ॥

उपदेशः कृतोऽनेन पक्षिणा मम संयुगे ।
शत्रूणां क्षपणे युक्तः प्राप्तकालश्च मे मतः ॥ ०४४ ॥

नाद्य शक्या मया हन्तुं पाण्डवा जितकाशिनः ।
बलवन्तः कृतोत्साहा लब्धलक्षाः प्रहारिणः ॥ ०४५ ॥

राज्ञः सकाशे तेषां च प्रतिज्ञातो वधो मया ॥ ०४५ ॥

पतङ्गाग्निसमां वृत्तिमास्थायात्मविनाशिनीम् ।
न्यायतो युध्यमानस्य प्राणत्यागो न संशयः ॥ ०४६ ॥

छद्मना तु भवेत्सिद्धिः शत्रूणां च क्षयो महान् ॥ ०४६ ॥

तत्र संशयितादर्थाद्योऽर्थो निःसंशयो भवेत् ।
तं जना बहु मन्यन्ते येऽर्थशास्त्रविशारदाः ॥ ०४७ ॥

यच्चाप्यत्र भवेद्वाच्यं गर्हितं लोकनिन्दितम् ।
कर्तव्यं तन्मनुष्येण क्षत्रधर्मेण वर्तता ॥ ०४८ ॥

निन्दितानि च सर्वाणि कुत्सितानि पदे पदे ।
सोपधानि कृतान्येव पाण्डवैरकृतात्मभिः ॥ ०४९ ॥

अस्मिन्नर्थे पुरा गीतौ श्रूयेते धर्मचिन्तकैः ।
श्लोकौ न्यायमवेक्षद्भिस्तत्त्वार्थं तत्त्वदर्शिभिः ॥ ०५० ॥

परिश्रान्ते विदीर्णे च भुञ्जाने चापि शत्रुभिः ।
प्रस्थाने च प्रवेशे च प्रहर्तव्यं रिपोर्बलम् ॥ ०५१ ॥

निद्रार्तमर्धरात्रे च तथा नष्टप्रणायकम् ।
भिन्नयोधं बलं यच्च द्विधा युक्तं च यद्भवेत् ॥ ०५२ ॥

इत्येवं निश्चयं चक्रे सुप्तानां युधि मारणे ।
पाण्डूनां सह पाञ्चालैर्द्रोणपुत्रः प्रतापवान्  ॥ ०५३  ॥

स क्रूरां मतिमास्थाय विनिश्चित्य मुहुर्मुहुः ।
सुप्तौ प्राबोधयत्तौ तु मातुलं भोजमेव च  ॥ ०५४  ॥

नोत्तरं प्रतिपेदे च तत्र युक्तं ह्रिया वृतः ।
स मुहूर्तमिव ध्यात्वा बाष्पविह्वलमब्रवीत्  ॥ ०५५  ॥

हतो दुर्योधनो राजा एकवीरो महाबलः ।
यस्यार्थे वैरमस्माभिरासक्तं पाण्डवैः सह  ॥ ०५६  ॥

एकाकी बहुभिः क्षुद्रैराहवे शुद्धविक्रमः ।
पातितो भीमसेनेन एकादशचमूपतिः  ॥ ०५७  ॥

वृकोदरेण क्षुद्रेण सुनृशंसमिदं कृतम् ।
मूर्धाभिषिक्तस्य शिरः पादेन परिमृद्नता  ॥ ०५८  ॥

विनर्दन्ति स्म पाञ्चालाः क्ष्वेडन्ति च हसन्ति च ।
धमन्ति शङ्खाञ्शतशो हृष्टा घ्नन्ति च दुन्दुभीन्  ॥ ०५९  ॥

वादित्रघोषस्तुमुलो विमिश्रः शङ्खनिस्वनैः ।
अनिलेनेरितो घोरो दिशः पूरयतीव हि  ॥ ०६०  ॥

अश्वानां हेषमाणानां गजानां चैव बृंहताम् ।
सिंहनादश्च शूराणां श्रूयते सुमहानयम्  ॥ ०६१  ॥

दिशं प्राचीं समाश्रित्य हृष्टानां गर्जतां भृशम् ।
रथनेमिस्वनाश्चैव श्रूयन्ते लोमहर्षणाः  ॥ ०६२  ॥

पाण्डवैर्धार्तराष्ट्राणां यदिदं कदनं कृतम् ।

वयमेव त्रयः शिष्टास्तस्मिन्महति वैशसे ॥ ०६३ ॥

केचिन्नागशतप्राणाः केचित्सर्वास्त्रकोविदाः ।
निहताः पाण्डवेयैः स्म मन्ये कालस्य पर्ययम् ॥ ०६४ ॥

एवमेतेन भाव्यं हि नूनं कार्येण तत्त्वतः ।
यथा ह्यस्येदृशी निष्ठा कृते कार्येऽपि दुष्करे ॥ ०६५ ॥

भवतोस्तु यदि प्रज्ञा न मोहादपचीयते ।
व्यापन्नेऽस्मिन्महत्यर्थे यन्नः श्रेयस्तदुच्यताम् ॥ ०६६ ॥

---

# अध्याय ००२

कृप उवाच ॥

श्रुतं ते वचनं सर्वं हेतुयुक्तं मया विभो ।
ममापि तु वचः किञ्चिच्छृणुष्वाद्य महाभुज ॥ ००१ ॥

आबद्धा मानुषाः सर्वे निर्बन्धाः कर्मणोर्द्वयोः ।
दैवे पुरुषकारे च परं ताभ्यां न विद्यते ॥ ००२ ॥

न हि दैवेन सिध्यन्ति कर्माण्येकेन सत्तम ।
न चापि कर्मणैकेन द्वाभ्यां सिद्धिस्तु योगतः ॥ ००३ ॥

ताभ्यामुभाभ्यां सर्वार्था निबद्धा ह्यधमोत्तमाः ।
प्रवृत्ताश्चैव दृश्यन्ते निवृत्ताश्चैव सर्वशः ॥ ००४ ॥

पर्जन्यः पर्वते वर्षन्किं नु साधयते फलम् ।

कृष्टे क्षेत्रे तथावर्षन्किं नु साधयते फलम्  ॥ ००५  ॥

उत्थानं चाप्यदैवस्य ह्यनुत्थानस्य दैवतम् ।
व्यर्थं भवति सर्वत्र पूर्वं कस्तत्र निश्चयः  ॥ ००६  ॥

प्रवृष्टे च यथा देवे सम्यक्क्षेत्रे च कर्षिते ।
बीजं महागुणं भूयात्तथा सिद्धिर्हि मानुषी  ॥ ००७  ॥

तयोर्दैवं विनिश्चित्य स्ववशेनैव वर्तते ।
प्राज्ञाः पुरुषकारं तु घटन्ते दाक्ष्यमास्थिताः  ॥ ००८  ॥

ताभ्यां सर्वे हि कार्यार्था मनुष्याणां नरर्षभ ।
विचेष्टन्तश्च दृश्यन्ते निवृत्ताश्च तथैव हि  ॥ ००९  ॥

कृतः पुरुषकारः सन्सोऽपि दैवेन सिध्यति ।
तथास्य कर्मणः कर्तुरभिनिर्वर्तते फलम्  ॥ ०१०  ॥

उत्थानं तु मनुष्याणां दक्षाणां दैववर्जितम् ।
अफलं दृश्यते लोके सम्यगप्युपपादितम्  ॥ ०११  ॥

तत्रालसा मनुष्याणां ये भवन्त्यमनस्विनः ।
उत्थानं ते विगर्हन्ति प्राज्ञानां तन्न रोचते  ॥ ०१२  ॥

प्रायशो हि कृतं कर्म अफलं दृश्यते भुवि ।
अकृत्वा च पुनर्दुःखं कर्म दृश्येन्महाफलम्  ॥ ०१३  ॥

चेष्टामकुर्व.णल्लभते यदि किञ्चिद्यदृच्छया ।
यो वा न लभते कृत्वा दुर्दशौ तावुभावपि  ॥ ०१४  ॥

शक्नोति जीवितुं दक्षो नालसः सुखमेधते ।
दृश्यन्ते जीवलोकेऽस्मिन्दक्षाः प्रायो हितैषिणः  ॥ ०१५  ॥

यदि दक्षः समारम्भात्कर्मणां नाश्नुते फलम् ।
नास्य वाच्यं भवेत्किञ्चित्तत्त्वं चाप्यधिगच्छति ॥ ०१६ ॥

अकृत्वा कर्म यो लोके फलं विन्दति विष्ठितः ।
स तु वक्तव्यतां याति द्वेष्यो भवति प्रायशः ॥ ०१७ ॥

एवमेतदनादृत्य वर्तते यस्त्वतोऽन्यथा ।
स करोत्यात्मनोऽनर्थान्नैष बुद्धिमतां नयः ॥ ०१८ ॥

हीनं पुरुषकारेण यदा दैवेन वा पुनः ।
कारणाभ्यामथैताभ्यामुत्थानमफलं भवेत् ॥ ०१९ ॥

हीनं पुरुषकारेण कर्म त्विह न सिध्यति ॥ ०१९ ॥

दैवतेभ्यो नमस्कृत्य यस्त्वर्थान्सम्यगीहते ।
दक्षो दाक्षिण्यसंपन्नो न स मोघं विहन्यते ॥ ०२० ॥

सम्यगीहा पुनरियं यो वृद्धानुपसेवते ।
आपृच्छति च यच्छ्रेयः करोति च हितं वचः ॥ ०२१ ॥

उत्थायोत्थाय हि सदा प्रष्टव्या वृद्धसंमताः ।
तेऽस्य योगे परं मूलं तन्मूला सिद्धिरुच्यते ॥ ०२२ ॥

वृद्धानां वचनं श्रुत्वा यो ह्युत्थानं प्रयोजयेत् ।
उत्थानस्य फलं सम्यक्तदा स लभतेऽचिरात् ॥ ०२३ ॥

रागात्क्रोधाद्भयाल्लोभाद्योऽर्थानीहेत मानवः ।
अनीशश्चावमानी च स शीघ्रं भ्रश्यते श्रियः ॥ ०२४ ॥

सोऽयं दुर्योधनेनार्थो लुब्धेनादीर्घदर्शिना ।

असमर्थ्यं समारब्धो मूढत्वादविचिन्तितः ॥ ०२५ ॥

हितबुद्धीननादृत्य संमन्त्र्यासाधुभिः सह ।
वार्यमाणोऽकरोद्वैरं पाण्डवैर्गुणवत्तरैः ॥ ०२६ ॥

पूर्वमप्यतिदुःशीलो न दैन्यं कर्तुमर्हति ।
तपत्यर्थे विपन्ने हि मित्राणामकृतं वचः ॥ ०२७ ॥

अन्वावर्तामहि वयं यत्तु तं पापपूरुषम् ।
अस्मानप्यनयस्तस्मात्प्राप्तोऽयं दारुणो महान् ॥ ०२८ ॥

अनेन तु ममाद्यापि व्यसनेनोपतापिता ।
बुद्धिश्चिन्तयतः किञ्चित्स्वं श्रेयो नावबुध्यते ॥ ०२९ ॥

मुह्यता तु मनुष्येण प्रष्टव्याः सुहृदो बुधाः ।
ते च पृष्टा यथा ब्रूयुस्तत्कर्तव्यं तथा भवेत् ॥ ०३० ॥

ते वयं धृतराष्ट्रं च गान्धारीं च समेत्य ह ।
उपपृच्छामहे गत्वा विदुरं च महामतिम् ॥ ०३१ ॥

ते पृष्टाश्च वदेयुर्यच्छ्रेयो नः समनन्तरम् ।
तदस्माभिः पुनः कार्यमिति मे नैष्ठिकी मतिः ॥ ०३२ ॥

अनारम्भात्तु कार्याणां नार्थः संपद्यते क्वचित् ।
कृते पुरुषकारे च येषां कार्यं न सिध्यति ॥ ०३३ ॥

दैवेनोपहतास्ते तु नात्र कार्या विचारणा ॥ ०३३ ॥

# अध्याय ००३

सञ्जय उवाच ॥

कृपस्य वचनं श्रुत्वा धर्मार्थसहितं शुभम् ।
अश्वत्थामा महाराज दुःखशोकसमन्वितः ॥ ००१ ॥

दह्यमानस्तु शोकेन प्रदीप्तेनाग्निना यथा ।
क्रूरं मनस्ततः कृत्वा तावुभौ प्रत्यभाषत ॥ ००२ ॥

पुरुषे पुरुषे बुद्धिः सा सा भवति शोभना ।
तुष्यन्ति च पृथक्सर्वे प्रज्ञया ते स्वया स्वया ॥ ००३ ॥

सर्वो हि मन्यते लोक आत्मानं बुद्धिमत्तरम् ।
सर्वस्यात्मा बहुमतः सर्वात्मानं प्रशंसति ॥ ००४ ॥

सर्वस्य हि स्वका प्रज्ञा साधुवादे प्रतिष्ठिता ।
परबुद्धिं च निन्दन्ति स्वां प्रशंसन्ति चासकृत् ॥ ००५ ॥

कारणान्तरयोगेन योगे येषां समा मतिः ।
तेऽन्योन्येन च तुष्यन्ति बहु मन्यन्ति चासकृत् ॥ ००६ ॥

तस्यैव तु मनुष्यस्य सा सा बुद्धिस्तदा तदा ।
कालयोगविपर्यासं प्राप्यान्योन्यं विपद्यते ॥ ००७ ॥

अचिन्त्यत्वाद्धि चित्तानां मनुष्याणां विशेषतः ।
चित्तवैकल्यमासाद्य सा सा बुद्धिः प्रजायते ॥ ००८ ॥

यथा हि वैद्यः कुशलो ज्ञात्वा व्याधिं यथाविधि ।
भेषजं कुरुते योगात्प्रशमार्थमिहाभिभो ॥ ००९ ॥

एवं कार्यस्य योगार्थं बुद्धिं कुर्वन्ति मानवाः ।
प्रज्ञया हि स्वया युक्तास्तां च निन्दन्ति मानवाः ॥ ०१० ॥

अन्यया यौवने मर्त्यो बुद्ध्या भवति मोहितः ।
मध्येऽन्यया जरायां तु सोऽन्यां रोचयते मतिम् ॥ ०११ ॥

व्यसनं वा पुनर्घोरं समृद्धिं वापि तादृशीम् ।
अवाप्य पुरुषो भोज कुरुते बुद्धिवैकृतम् ॥ ०१२ ॥

एकस्मिन्नेव पुरुषे सा सा बुद्धिस्तदा तदा ।
भवत्यनित्यप्रज्ञत्वात्सा तस्यैव न रोचते ॥ ०१३ ॥

निश्चित्य तु यथाप्रज्ञं यां मतिं साधु पश्यति ।
तस्यां प्रकुरुते भावं सा तस्योद्योगकारिका ॥ ०१४ ॥

सर्वो हि पुरुषो भोज साध्वेतदिति निश्चितः ।
कर्तुमारभते प्रीतो मरणादिषु कर्मसु ॥ ०१५ ॥

सर्वे हि युक्तिं विज्ञाय प्रज्ञां चापि स्वकां नराः ।
चेष्टन्ते विविधाश्चेष्टा हितमित्येव जानते ॥ ०१६ ॥

उपजाता व्यसनजा येयमद्य मतिर्मम ।
युवयोस्तां प्रवक्ष्यामि मम शोकविनाशिनीम् ॥ ०१७ ॥

प्रजापतिः प्रजाः सृष्ट्वा कर्म तासु विधाय च ।
वर्णे वर्णे समाधत्त एकैकं गुणवत्तरम् ॥ ०१८ ॥

ब्राह्मणे दममव्यग्रं क्षत्रिये तेज उत्तमम् ।
दाक्ष्यं वैश्ये च शूद्रे च सर्ववर्णानुकूलताम् ॥ ०१९ ॥

अदान्तो ब्राह्मणोऽसाधुर्निस्तेजाः क्षत्रियोऽधमः ।

अदक्षो निन्द्यते वैश्यः शूद्रश्च प्रतिकूलवान् ॥ ०२० ॥

सोऽस्मि जातः कुले श्रेष्ठे ब्राह्मणानां सुपूजिते ।
मन्दभाग्यतयास्म्येतं क्षत्रधर्ममनु ष्ठितः ॥ ०२१ ॥

क्षत्रधर्मं विदित्वाहं यदि ब्राह्मण्यसंश्रितम् ।
प्रकुर्यां सुमहत्कर्म न मे तत्साधु संमतम् ॥ ०२२ ॥

धारयित्वा धनुर्दिव्यं दिव्यान्यस्त्राणि चाहवे ।
पितरं निहतं दृष्ट्वा किं नु वक्ष्यामि संसदि ॥ ०२३ ॥

सोऽहमद्य यथाकामं क्षत्रधर्ममुपास्य तम् ।
गन्तास्मि पदवीं राज्ञः पितुश्चापि महाद्युतेः ॥ ०२४ ॥

अद्य स्वप्स्यन्ति पाञ्चाला विश्वस्ता जितकाशिनः ।
विमुक्तयुग्यकवचा हर्षेण च समन्विताः ॥ ०२५ ॥

वयं जिता मताश्चैषां श्रान्ता व्यायमनेन च ॥ ०२५ ॥

तेषां निशि प्रसुप्तानां स्वस्थानां शिबिरे स्वके ।
अवस्कन्दं करिष्यामि शिबिरस्याद्य दुष्करम् ॥ ०२६ ॥

तानवस्कन्द्य शिबिरे प्रेतभूतान्विचेतसः ।
सूदयिष्यामि विक्रम्य मघवानिव दानवान् ॥ ०२७ ॥

अद्य तान्सहितान्सर्वान्धृष्टद्युम्नपुरोगमान् ।
सूदयिष्यामि विक्रम्य कक्षं दीप्त इवानलः ॥ ०२८ ॥

निहत्य चैव पाञ्चालाञ्शान्तिं लब्धास्मि सत्तम ॥ ०२८ ॥

पाञ्चालेषु चरिष्यामि सूदयन्नद्य संयुगे ।

पिनाकपाणिः सङ्क्रुद्धः स्वयं रुद्रः पशुष्विव ॥ ०२९ ॥

अद्याहं सर्वपाञ्चालान्निहत्य च निकृत्य च ।
अर्दयिष्यामि सङ्क्रुद्धो रणे पाण्डुसुतांस्तथा ॥ ०३० ॥

अद्याहं सर्वपाञ्चालैः कृत्वा भूमिं शरीरिणीम् ।
प्रहृत्यैकैकशस्तेभ्यो भविष्याम्यनृणः पितुः ॥ ०३१ ॥

दुर्योधनस्य कर्णस्य भीष्मसैन्धवयोरपि ।
गमयिष्यामि पाञ्चालान्पदवीमद्य दुर्गमाम् ॥ ०३२ ॥

अद्य पाञ्चालराजस्य धृष्टद्युम्नस्य वै निशि ।
विरात्रे प्रमथिष्यामि पशोरिव शिरो बलात् ॥ ०३३ ॥

अद्य पाञ्चालपाण्डूनां शयितानात्मजान्निशि ।
खड्गेन निशितेनाजौ प्रमथिष्यामि गौतम ॥ ०३४ ॥

अद्य पाञ्चालसेनां तां निहत्य निशि सौप्तिके ।
कृतकृत्यः सुखी चैव भविष्यामि महामते ॥ ०३५ ॥

---

# अध्याय ००४

कृप उवाच ॥

दिष्ट्या ते प्रतिकर्तव्ये मतिर्जातेयमच्युत ।
न त्वा वारयितुं शक्तो वज्रपाणिरपि स्वयम् ॥ ००१ ॥

अनुयास्यावहे त्वां तु प्रभाते सहितावुभौ ।
अद्य रात्रौ विश्रमस्व विमुक्तकवचध्वजः ॥ ००२ ॥

अहं त्वामनुयास्यामि कृतवर्मा च सात्वतः ।
परानभिमुखं यान्तं रथावास्थाय दंशितौ ॥ ००३ ॥

आवाभ्यां सहितः शत्रूञ्श्वोऽसि हन्ता समागमे ।
विक्रम्य रथिनां श्रेष्ठ पाञ्चालान्सपदानुगान् ॥ ००४ ॥

शक्तस्त्वमसि विक्रान्तुं विश्रमस्व निशामिमाम् ।
चिरं ते जाग्रतस्तात स्वप तावन्निशामिमाम् ॥ ००५ ॥

विश्रान्तश्च विनिद्रश्च स्वस्थचित्तश्च मानद ।
समेत्य समरे शत्रून्वधिष्यसि न संशयः ॥ ००६ ॥

न हि त्वा रथिनां श्रेष्ठ प्रगृहीतवरायुधम् ।
जेतुमुत्सहते कश्चिदपि देवेषु पावकिः ॥ ००७ ॥

कृपेण सहितं यान्तं युक्तं च कृतवर्मणा ।
को द्रौणिं युधि संरब्धं योधयेदपि देवराट् ॥ ००८ ॥

ते वयं परिविश्रान्ता विनिद्रा विगतज्वराः ।
प्रभातायां रजन्यां वै निहनिष्याम शात्रवान् ॥ ००९ ॥

तव ह्यस्त्राणि दिव्यानि मम चैव न संशयः ।
सात्वतोऽपि महेष्वासो नित्यं युद्धेषु कोविदः ॥ ०१० ॥

ते वयं सहितास्तात सर्वाञ्शत्रून्समागतान् ।
प्रसह्य समरे हत्वा प्रीतिं प्राप्स्याम पुष्कलाम् ॥ ०११ ॥

विश्रमस्व त्वमव्यग्रः स्वप चेमां निशां सुखम् ॥ ०११ ॥

अहं च कृतवर्मा च प्रयान्तं त्वां नरोत्तम ।
अनुयास्याव सहितौ धन्विनौ परतापिनौ ॥ ०१२ ॥

रथिनं त्वरया यान्तं रथावास्थाय दंशितौ ॥ ०१२ ॥

स गत्वा शिबिरं तेषां नाम विश्राव्य चाहवे ।
ततः कर्तासि शत्रूणां युध्यतां कदनं महत् ॥ ०१३ ॥

कृत्वा च कदनं तेषां प्रभाते विमलेऽहनि ।
विहरस्व यथा शक्रः सूदयित्वा महासुरान् ॥ ०१४ ॥

त्वं हि शक्तो रणे जेतुं पाञ्चालानां वरूथिनीम् ।
दैत्यसेनामिव क्रुद्धः सर्वदानवसूदनः ॥ ०१५ ॥

मया त्वां सहितं संख्ये गुप्तं च कृतवर्मणा ।
न सहेत विभुः साक्षाद्वज्रपाणिरपि स्वयम् ॥ ०१६ ॥

न चाहं समरे तात कृतवर्मा तथैव च ।
अनिर्जित्य रणे पाण्डून्व्यपयास्याव कर्हिचित् ॥ ०१७ ॥

हत्वा च समरे क्षुद्रान्पाञ्चालान्पाण्डुभिः सह ।
निवर्तिष्यामहे सर्वे हता वा स्वर्गगा वयम् ॥ ०१८ ॥

सर्वोपायैः सहायास्ते प्रभाते वयमेव हि ।
सत्यमेतन्महाबाहो प्रब्रवीमि तवानघ ॥ ०१९ ॥

एवमुक्तस्ततो द्रौणिर्मातुलेन हितं वचः ।
अब्रवीन्मातुलं राजन्क्रोधादुद्धृत्य लोचने ॥ ०२० ॥

आतुरस्य कुतो निद्रा नरस्यामर्षितस्य च ।

अर्थांश्चिन्तयतश्चापि कामयानस्य वा पुनः ॥ ०२१ ॥

तदिदं समनुप्राप्तं पश्य मेऽद्य चतुष्टयम् ।
यस्य भागश्चतुर्थो मे स्वप्नमह्नाय नाशयेत् ॥ ०२२ ॥

किं नाम दुःखं लोकेऽस्मिन्पितुर्वधमनुस्मरन् ।
हृदयं निर्दहन्मेऽद्य रात्र्यहानि न शाम्यति ॥ ०२३ ॥

यथा च निहतः पापैः पिता मम विशेषतः ।
प्रत्यक्षमपि ते सर्वं तन्मे मर्माणि कृन्तति ॥ ०२४ ॥

कथं हि मादृशो लोके मुहूर्तमपि जीवति ।
द्रोणो हतेति यद्वाचः पाञ्चालानां शृणोम्यहम् ॥ ०२५ ॥

दृष्टद्युम्नमहत्वाजौ नाहं जीवितुमुत्सहे ।
स मे पितृवधाद्वध्यः पाञ्चाला ये च सङ्गताः ॥ ०२६ ॥

विलापो भग्नसक्थस्य यस्तु राज्ञो मया श्रुतः ।
स पुनर्हृदयं कस्य क्रूरस्यापि न निर्दहेत् ॥ ०२७ ॥

कस्य ह्यकरुणस्यापि नेत्राभ्यामश्रु नाव्रजेत् ।
नृपतेर्भग्नसक्थस्य श्रुत्वा तादृग्वचः पुनः ॥ ०२८ ॥

यश्चायं मित्रपक्षो मे मयि जीवति निर्जितः ।
शोकं मे वर्धयत्येष वारिवेग इवार्णवम् ॥ ०२९ ॥

एकाग्रमनसो मेऽद्य कुतो निद्रा कुतः सुखम् ॥ ०२९ ॥

वासुदेवार्जुनाभ्यां हि तानहं परिरक्षितान् ।
अविषह्यतमान्मन्ये महेन्द्रेणापि मातुल ॥ ०३० ॥

न चास्मि शक्यः संयन्तुमस्मात्कार्यात्कथञ्चन ।
न तं पश्यामि लोकेऽस्मिन्यो मां कार्यान्निवर्तयेत्  ॥ ०३१  ॥

इति मे निश्चिता बुद्धिरेषा साधुमता च मे  ॥ ०३१  ॥

वार्त्तिकैः कथ्यमानस्तु मित्राणां मे पराभवः ।
पाण्डवानां च विजयो हृदयं दहतीव मे  ॥ ०३२  ॥

अहं तु कदनं कृत्वा शत्रूणामद्य सौप्तिके ।
ततो विश्रमिता चैव स्वप्ता च विगतज्वरः  ॥ ०३३  ॥

---

# अध्याय ००५

कृप उवाच  ॥

शुश्रूषुरपि दुर्मेधाः पुरुषोऽनियतेन्द्रियः ।
नालं वेदयितुं कृत्स्नौ धर्मार्थाविति मे मतिः  ॥ ००१  ॥

तथैव तावन्मेधावी विनयं यो न शिक्षति ।
न च किञ्चन जानाति सोऽपि धर्मार्थनिश्चयम्  ॥ ००२  ॥

शुश्रूषुस्त्वेव मेधावी पुरुषो नियतेन्द्रियः ।
जानीयादागमान्सर्वान्ग्राह्यं च न विरोधयेत्  ॥ ००३  ॥

अनेयस्त्ववमानी यो दुरात्मा पापपूरुषः ।
दिष्टमुत्सृज्य कल्याणं करोति बहुपापकम्  ॥ ००४  ॥

नाथवन्तं तु सुहृदः प्रतिषेधन्ति पातकात् ।
निवर्तते तु लक्ष्मीवान्नालक्ष्मीवान्निवर्तते ॥ ००५ ॥

यथा ह्युच्चावचैर्वाक्यैः क्षिप्तचित्तो नियम्यते ।
तथैव सुहृदा शक्यो नशक्यस्त्ववसीदति ॥ ००६ ॥

तथैव सुहृदं प्राज्ञं कुर्वाणं कर्म पापकम् ।
प्राज्ञाः संप्रतिषेधन्ते यथाशक्ति पुनः पुनः ॥ ००७ ॥

स कल्याणे मतिं कृत्वा नियम्यात्मानमात्मना ।
कुरु मे वचनं तात येन पश्चान्न तप्यसे ॥ ००८ ॥

न वधः पूज्यते लोके सुप्तानामिह धर्मतः ।
तथैव न्यस्तशस्त्राणां विमुक्तरथवाजिनाम् ॥ ००९ ॥

ये च ब्रूयुस्तवास्मीति ये च स्युः शरणागताः ।
विमुक्तमूर्धजा ये च ये चापि हतवाहनाः ॥ ०१० ॥

अद्य स्वप्स्यन्ति पाञ्चाला विमुक्तकवचा विभो ।
विश्वस्ता रजनीं सर्वे प्रेता इव विचेतसः ॥ ०११ ॥

यस्तेषां तदवस्थानां द्रुह्येत पुरुषोऽनृजुः ।
व्यक्तं स नरके मज्जेदगाधे विपुलेऽप्लवे ॥ ०१२ ॥

सर्वास्त्रविदुषां लोके श्रेष्ठस्त्वमसि विश्रुतः ।
न च ते जातु लोकेऽस्मिन्सुसूक्ष्ममपि किल्बिषम् ॥ ०१३ ॥

त्वं पुनः सूर्यसङ्काशः श्वोभूत उदिते रवौ ।
प्रकाशे सर्वभूतानां विजेता युधि शात्रवान् ॥ ०१४ ॥

असंभावितरूपं हि त्वयि कर्म विगर्हितम् ।

शुक्ले रक्तमिव न्यस्तं भवेदिति मतिर्मम ॥ ०१५ ॥

अश्वत्थामोवाच ॥

एवमेतद्यथात्थ त्वमनुशास्मीह मातुल ।
तैस्तु पूर्वमयं सेतुः शतधा विदलीकृतः ॥ ०१६ ॥

प्रत्यक्षं भूमिपालानां भवतां चापि संनिधौ ।
न्यस्तशस्त्रो मम पिता धृष्टद्युम्नेन पातितः ॥ ०१७ ॥

कर्णश्च पतिते चक्रे रथस्य रथिनां वरः ।
उत्तमे व्यसने सन्नो हतो गाण्डीवधन्वना ॥ ०१८ ॥

तथा शांतनवो भीष्मो न्यस्तशस्त्रो निरायुधः ।
शिखण्डिनं पुरस्कृत्य हतो गाण्डीवधन्वना ॥ ०१९ ॥

भूरिश्रवा महेष्वासस्तथा प्रायगतो रणे ।
क्रोशतां भूमिपालानां युयुधानेन पातितः ॥ ०२० ॥

दुर्योधनश्च भीमेन समेत्य गदया मृधे ।
पश्यतां भूमिपालानामधर्मेण निपातितः ॥ ०२१ ॥

एकाकी बहुभिस्तत्र परिवार्य महारथैः ।
अधर्मेण नरव्याघ्रो भीमसेनेन पातितः ॥ ०२२ ॥

विलापो भग्नसक्थस्य यो मे राज्ञः परिश्रुतः ।
वार्त्तिकानां कथयतां स मे मर्माणि कृन्तति ॥ ०२३ ॥

एवमधार्मिकाः पापाः पाञ्चाला भिन्नसेतवः ।
तानेवं भिन्नमर्यादान्किं भवान्न विगर्हति ॥ ०२४ ॥

पितृहन्तॄनहं हत्वा पाञ्चालान्निशि सौप्तिके ।
कामं कीटः पतङ्गो वा जन्म प्राप्य भवामि वै  ॥ ०२५  ॥

त्वरे चाहमनेनाद्य यदिदं मे चिकीर्षितम् ।
तस्य मे त्वरमाणस्य कुतो निद्रा कुतः सुखम्  ॥ ०२६  ॥

न स जातः पुमा.ण्ल्लोके कश्चिन्न च भविष्यति ।
यो मे व्यावर्तयेदेतां वधे तेषां कृतां मतिम्  ॥ ०२७  ॥

सञ्जय उवाच  ॥

एवमुक्त्वा महाराज द्रोणपुत्रः प्रतापवान् ।
एकान्ते योजयित्वाश्वान्प्रायादभिमुखः परान्  ॥ ०२८  ॥

तमब्रूतां महात्मानौ भोजशारद्वतावुभौ ।
किमयं स्यन्दनो युक्तः किं च कार्यं चिकीर्षितम्  ॥ ०२९  ॥

एकसार्थं प्रयातौ स्वस्त्वया सह नरर्षभ ।
समदुःखसुखौ चैव नावां शङ्कितुमर्हसि  ॥ ०३०  ॥

अश्वत्थामा तु सङ्क्रुद्धः पितुर्वधमनुस्मरन् ।
ताभ्यां तथ्यं तदाचख्यौ यदस्यात्मचिकीर्षितम्  ॥ ०३१  ॥

हत्वा शतसहस्राणि योधानां निशितैः शरैः ।
न्यस्तशस्त्रो मम पिता धृष्टद्युम्नेन पातितः  ॥ ०३२  ॥

तं तथैव हनिष्यामि न्यस्तवर्माणमद्य वै ।
पुत्रं पाञ्चालराजस्य पापं पापेन कर्मणा  ॥ ०३३  ॥

कथं च निहतः पापः पाञ्चालः पशुवन्मया ।
शस्त्राहवजितां लोकान्प्राप्नुयादिति मे मतिः  ॥ ०३४  ॥

क्षिप्रं संनद्धकवचौ सखड्गावात्तकार्मुकौ ।
समास्थाय प्रतीक्षेतां रथवर्यौ परंतपौ ॥ ०३५ ॥

इत्युक्त्वा रथमास्थाय प्रायादभिमुखः परान् ।
तमन्वगात्कृपो राजन्कृतवर्मा च सात्वतः ॥ ०३६ ॥

ते प्रयाता व्यरोचन्त परानभिमुखास्त्रयः ।
हूयमाना यथा यज्ञे समिद्धा हव्यवाहनाः ॥ ०३७ ॥

ययुश्च शिबिरं तेषां संप्रसुप्तजनं विभो ।
द्वारदेशं तु संप्राप्य द्रौणिस्तस्थौ रथोत्तमे ॥ ०३८ ॥

---

# अध्याय ००६

धृतराष्ट्र उवाच ॥

द्वारदेशे ततो द्रौणिमवस्थितमवेक्ष्य तौ ।
अकुर्वतां भोजकृपौ किं सञ्जय वदस्व मे ॥ ००१ ॥

सञ्जय उवाच ॥

कृतवर्माणमामन्त्र्य कृपं च स महारथम् ।
द्रौणिर्मन्युपरीतात्मा शिबिरद्वारमासदत् ॥ ००२ ॥

तत्र भूतं महाकायं चन्द्रार्कसदृशद्युतिम् ।
सोऽपश्यद्द्वारमावृत्य तिष्ठन्तं लोमहर्षणम् ॥ ००३ ॥

वसानं चर्म वैयाघ्रं महारुधिरविस्रवम् ।
कृष्णाजिनोत्तरासङ्गं नागयज्ञोपवीतिनम् ॥ ००४ ॥

बाहुभिः स्वायतैः पीनैर्नानाप्रहरणोद्यतैः ।
बद्धाङ्गदमहासर्पं ज्वालामालाकुलाननम् ॥ ००५ ॥

दंष्ट्राकरालवदनं व्यादितास्यं भयावहम् ।
नयनानां सहस्रैश्च विचित्रैरभिभूषितम् ॥ ००६ ॥

नैव तस्य वपुः शक्यं प्रवक्तुं वेष एव वा ।
सर्वथा तु तदालक्ष्य स्फुटेयुरपि पर्वताः ॥ ००७ ॥

तस्यास्यान्नासिकाभ्यां च श्रवणाभ्यां च सर्वशः ।
तेभ्यश्चाक्षिसहस्रेभ्यः प्रादुरासन्महार्चिषः ॥ ००८ ॥

तथा तेजोमरीचिभ्यः शङ्खचक्रगदाधराः ।
प्रादुरासन्हृषीकेशाः शतशोऽथ सहस्रशः ॥ ००९ ॥

तदत्यद्भुतमालोक्य भूतं लोकभयङ्करम् ।
द्रौणिरव्यथितो दिव्यैरस्त्रवर्षैरवाकिरत् ॥ ०१० ॥

द्रौणिमुक्ताञ्शरांस्तांस्तु तद्भूतं महदग्रसत् ।
उदधेरिव वार्योघान्पावको वडवामुखः ॥ ०११ ॥

अश्वत्थामा तु संप्रेक्ष्य ताञ्शरौघान्निरर्थकान् ।
रथशक्तिं मुमोचास्मै दीप्तामग्निशिखामिव ॥ ०१२ ॥

सा तदाहत्य दीप्ताग्रा रथशक्तिरशीर्यत ।
युगान्ते सूर्यमाहत्य महोल्केव दिवश्च्युता ॥ ०१३ ॥

अथ हेमत्सरुं दिव्यं खड्गमाकाशवर्चसम् ।
कोशात्समुद्बबर्हाशु बिलाद्दीप्तमिवोरगम्  ॥ ०१४  ॥

ततः खड्गवरं धीमान्भूताय प्राहिणोत्तदा ।
स तदासाद्य भूतं वै विलयं तूलवद्ययौ  ॥ ०१५  ॥

ततः स कुपितो द्रौणिरिन्द्रकेतुनिभां गदाम् ।
ज्वलन्तीं प्राहिणोत्तस्मै भूतं तामपि चाग्रसत्  ॥ ०१६  ॥

ततः सर्वायुधाभावे वीक्षमाणस्ततस्ततः ।
अपश्यत्कृतमाकाशमनाकाशं जनार्दनैः  ॥ ०१७  ॥

तदद्भुततमं दृष्ट्वा द्रोणपुत्रो निरायुधः ।
अब्रवीदभिसंतप्तः कृपवाक्यमनुस्मरन्  ॥ ०१८  ॥

ब्रुवतामप्रियं पथ्यं सुहृदां न शृणोति यः ।
स शोचत्यापदं प्राप्य यथाहमतिवर्त्य तौ  ॥ ०१९  ॥

शास्त्रदृष्टानवध्यान्यः समतीत्य जिघांसति ।
स पथः प्रच्युतो धर्म्यात्कुपथं प्रतिपद्यते  ॥ ०२०  ॥

गोब्राह्मणनृपस्त्रीषु सख्युर्मातुर्गुरोस्तथा ।
वृद्धबालजडान्धेषु सुप्तभीतोत्थितेषु च  ॥ ०२१  ॥

मत्तोन्मत्तप्रमत्तेषु न शस्त्राण्युपधारयेत् ।
इत्येवं गुरुभिः पूर्वमुपदिष्टं नृणां सदा  ॥ ०२२  ॥

सोऽहमुत्क्रम्य पन्थानं शास्त्रदृष्टं सनातनम् ।
अमार्गेणैवमारभ्य घोरामापदमागतः  ॥ ०२३  ॥

तां चापदं घोरतरां प्रवदन्ति मनीषिणः ।

यदुद्यम्य महत्कृत्यं भयादपि निवर्तते ॥ ०२४ ॥

अशक्यं चैव कः कर्तुं शक्तः शक्तिबलादिह ।
न हि दैवाद्गरीयो वै मानुषं कर्म कथ्यते ॥ ०२५ ॥

मानुषं कुर्वतः कर्म यदि दैवान्न सिध्यति ।
स पथः प्रच्युतो धर्म्याद्विपदं प्रतिपद्यते ॥ ०२६ ॥

प्रतिघातं ह्यविज्ञातं प्रवदन्ति मनीषिणः ।
यदारभ्य क्रियां काञ्चिद्भयादिह निवर्तते ॥ ०२७ ॥

तदिदं दुष्प्रणीतेन भयं मां समुपस्थितम् ।
न हि द्रोणसुतः संख्ये निवर्तेत कथञ्चन ॥ ०२८ ॥

इदं च सुमहद्भूतं दैवदण्डमिवोद्यतम् ।
न चैतदभिजानामि चिन्तयन्नपि सर्वथा ॥ ०२९ ॥

ध्रुवं येयमधर्मे मे प्रवृत्ता कलुषा मतिः ।
तस्याः फलमिदं घोरं प्रतिघाताय दृश्यते ॥ ०३० ॥

तदिदं दैवविहितं मम संख्ये निवर्तनम् ।
नान्यत्र दैवादुद्यन्तुमिह शक्यं कथञ्चन ॥ ०३१ ॥

सोऽहमद्य महादेवं प्रपद्ये शरणं प्रभुम् ।
दैवदण्डमिमं घोरं स हि मे नाशयिष्यति ॥ ०३२ ॥

कपर्दिनं प्रपद्याथ देवदेवमुमापतिम् ।
कपालमालिनं रुद्रं भगनेत्रहरं हरम् ॥ ०३३ ॥

स हि देवोऽत्यगाद्देवांस्तपसा विक्रमेण च ।
तस्माच्छरणमभ्येष्ये गिरिशं शूलपाणिनम् ॥ ०३४ ॥

# शिवस्तुतिः

## अध्याय ००७

सञ्जय उवाच ॥

स एवं चिन्तयित्वा तु द्रोणपुत्रो विशां पते ।
अवतीर्य रथोपस्थाद्दध्यौ संप्रयतः स्थितः ॥ ००१ ॥

द्रौणिरुवाच ॥

उग्रं स्थाणुं शिवं रुद्रं शर्वमीशानमीश्वरम् ।
गिरिशं वरदं देवं भवं भावनमव्ययम् ॥ ००२ ॥

शितिकण्ठमजं शक्रं क्रथं क्रतुहरं हरम् ।
विश्वरूपं विरूपाक्षं बहुरूपमुमापतिम् ॥ ००३ ॥

श्मशानवासिनं दृप्तं महागणपतिं प्रभुम् ।
खट्वाङ्गधारिणं मुण्डं जटिलं ब्रह्मचारिणम् ॥ ००४ ॥

मनसाप्यसुचिन्त्येन दुष्करेणाल्पचेतसा ।
सोऽहमात्मोपहारेण यक्ष्ये त्रिपुरघातिनम् ॥ ००५ ॥

स्तुतं स्तुत्यं स्तूयमानममोघं चर्मवाससम् ।
विलोहितं नीलकण्ठमपृक्तं दुर्निवारणम् ॥ ००६ ॥

शुक्रं विश्वसृजं ब्रह्म ब्रह्मचारिणमेव च ।
व्रतवन्तं तपोनित्यमनन्तं तपतां गतिम्  ॥ ००७  ॥

बहुरूपं गणाध्यक्षं त्र्यक्षं पारिषदप्रियम् ।
गणाध्यक्षेक्षितमुखं गौरीहृदयवल्लभम्  ॥ ००८  ॥

कुमारपितरं पिङ्गं गोवृषोत्तमवाहनम् ।
तनुवाससमत्युग्रमुमाभूषणतत्परम्  ॥ ००९  ॥

परं परेभ्यः परमं परं यस्मान्न विद्यते ।
इष्वस्त्रोत्तमभर्तारं दिगन्तं चैव दक्षिणम्  ॥ ०१०  ॥

हिरण्यकवचं देवं चन्द्रमौलिविभूषितम् ।
प्रपद्ये शरणं देवं परमेण समाधिना  ॥ ०११  ॥

इमां चाप्यापदं घोरां तराम्यद्य सुदुस्तराम् ।
सर्वभूतोपहारेण यक्ष्येऽहं शुचिना शुचिम्  ॥ ०१२  ॥

इति तस्य व्यवसितं ज्ञात्वा त्यागात्मकं मनः ।
पुरस्तात्काञ्चनी वेदिः प्रादुरासीन्महात्मनः  ॥ ०१३  ॥

तस्यां वेद्यां तदा राजंश्चित्रभानुरजायत ।
द्यां दिशो विदिशः खं च ज्वालाभिरभिपूरयन्  ॥ ०१४  ॥

दीप्तास्यनयनाश्चात्र नैकपादशिरोभुजाः ।
द्विपशैलप्रतीकाशाः प्रादुरासन्महाननाः  ॥ ०१५  ॥

श्ववराहोष्ट्ररूपाश्च हयगोमायुगोमुखाः ।
ऋक्षमार्जारवदना व्याघ्रद्वीपिमुखास्तथा  ॥ ०१६  ॥

काकवक्त्राः प्लवमुखाः शुकवक्त्रास्तथैव च ।

महाजगरवक्त्राश्च हंसवक्त्राः सितप्रभाः ॥ ०१७ ॥

दार्वाघाटमुखाश्चैव चाषवक्त्राश्च भारत ।
कूर्मनक्रमुखाश्चैव शिशुमारमुखास्तथा ॥ ०१८ ॥

महामकरवक्त्राश्च तिमिवक्त्रास्तथैव च ।
हरिवक्त्राः क्रौञ्चमुखाः कपोतेभमुखास्तथा ॥ ०१९ ॥

पारावतमुखाश्चैव मद्गुवक्त्रास्तथैव च ।
पाणिकर्णाः सहस्राक्षास्तथैव च शतोदराः ॥ ०२० ॥

निर्मांसाः कोकवक्त्राश्च श्येनवक्त्राश्च भारत ।
तथैवाशिरसो राजन्नृक्षवक्त्राश्च भीषणाः ॥ ०२१ ॥

प्रदीप्तनेत्रजिह्वाश्च ज्वालावक्त्रास्तथैव च ।
मेषवक्त्रास्तथैवान्ये तथा छागमुखा नृप ॥ ०२२ ॥

शङ्खाभाः शङ्खवक्त्राश्च शङ्खकर्णास्तथैव च ।
शङ्खमालापरिकराः शङ्खध्वनिसमस्वनाः ॥ ०२३ ॥

जटाधराः पञ्चशिखास्तथा मुण्डाः कृशोदराः ।
चतुर्दंष्ट्राश्चतुर्जिह्वाः शङ्कुकर्णाः किरीटिनः ॥ ०२४ ॥

मौलीधराश्च राजेन्द्र तथाकुञ्चितमूर्धजाः ।
उष्णीषिणो मुकुटिनश्चारुवक्त्राः स्वलङ्कृताः ॥ ०२५ ॥

पद्मोत्पलापीडधरास्तथा कुमुदधारिणः ।
माहात्म्येन च संयुक्ताः शतशोऽथ सहस्रशः ॥ ०२६ ॥

शतघ्नीचक्रहस्ताश्च तथा मुसलपाणयः ।
भुशुण्डीपाशहस्ताश्च गदाहस्ताश्च भारत ॥ ०२७ ॥

पृष्ठेषु बद्धेषुधयश्चित्रबाणा रणोत्कटाः ।
सध्वजाः सपताकाश्च सघण्टाः सपरश्वधाः ॥ ०२८ ॥

महापाशोद्यतकरास्तथा लगुडपाणयः ।
स्थूणाहस्ताः खड्गहस्ताः सर्पोच्छ्रितकिरीटिनः ॥ ०२९ ॥

महासर्पाङ्गदधराश्चित्राभरणधारिणः ॥ ०२९ ॥

रजोध्वस्ताः पङ्कदिग्धाः सर्वे शुक्लाम्बरस्रजः ।
नीलाङ्गाः कमलाङ्गाश्च मुण्डवक्रास्तथैव च ॥ ०३० ॥

भेरीशङ्खमृदङ्गांस्ते झर्झरानकगोमुखान् ।
अवादयन्पारिषदाः प्रहृष्टाः कनकप्रभाः ॥ ०३१ ॥

गायमानास्तथैवान्ये नृत्यमानास्तथापरे ।
लङ्घयन्तः प्लवन्तश्च वल्गन्तश्च महाबलाः ॥ ०३२ ॥

धावन्तो जवनाश्चण्डाः पवनोद्धूतमूर्धजाः ।
मत्ता इव महानागा विनदन्तो मुहुर्मुहुः ॥ ०३३ ॥

सुभीमा घोररूपाश्च शूलपट्टिशपाणयः ।
नानाविरागवसनाश्चित्रमाल्यानुलेपनाः ॥ ०३४ ॥

रत्नचित्राङ्गदधराः समुद्यतकरास्तथा ।
हन्तारो द्विषतां शूराः प्रसह्यासह्यविक्रमाः ॥ ०३५ ॥

पातारोऽसृग्वसाद्यानां मांसान्त्रकृतभोजनाः ।
चूडालाः कर्णिकालाश्च प्रकृशाः पिठरोदराः ॥ ०३६ ॥

अतिह्रस्वातिदीर्घाश्च प्रबलाश्चातिभैरवाः ।

विकटाः काललम्बोष्ठा बृहच्छेफास्थिपिण्डिकाः ॥ ०३७ ॥

महार्हनानामुकुटा मुण्डाश्च जटिलाः परे ।
सार्केन्दुग्रहनक्षत्रां द्यां कुर्युर्ये महीतले ॥ ०३८ ॥

उत्सहेरंश्च ये हन्तुं भूतग्रामं चतुर्विधम् ।
ये च वीतभया नित्यं हरस्य भ्रुकुटीभटाः ॥ ०३९ ॥

कामकारकराः सिद्धास्त्रैलोक्यस्येश्वरेश्वराः ।
नित्यानन्दप्रमुदिता वागीशा वीतमत्सराः ॥ ०४० ॥

प्राप्याष्टगुणमैश्वर्यं ये न यान्ति च विस्मयम् ।
येषां विस्मयते नित्यं भगवान्कर्मभिर्हरः ॥ ०४१ ॥

मनोवाक्कर्मभिर्भक्तैर्नित्यमाराधितश्च यैः ।
मनोवाक्कर्मभिर्भक्तान्पाति पुत्रानिवौरसान् ॥ ०४२ ॥

पिबन्तोऽसृग्वसास्त्वन्ये क्रुद्धा ब्रह्मद्विषां सदा ।
चतुर्विंशात्मकं सोमं ये पिबन्ति च नित्यदा ॥ ०४३ ॥

श्रुतेन ब्रह्मचर्येण तपसा च दमेन च ।
ये समाराध्य शूलाङ्कं भवसायुज्यमागताः ॥ ०४४ ॥

यैरात्मभूतैर्भगवान्पार्वत्या च महेश्वरः ।
सह भूतगणान्भुङ्क्ते भूतभव्यभवत्प्रभुः ॥ ०४५ ॥

नानाविचित्रहसितक्ष्वेडितोत्क्रुष्टगर्जितैः ।
संनादयन्तस्ते विश्वमश्वत्थामानमभ्ययुः ॥ ०४६ ॥

संस्तुवन्तो महादेवं भाः कुर्वाणाः सुवर्चसः ।
विवर्धयिषवो द्रौणेर्महिमानं महात्मनः ॥ ०४७ ॥

जिज्ञासमानास्तत्तेजः सौप्तिकं च दिदृक्षवः ।
भीमोग्रपरिघालातशूलपट्टिशपाणयः ॥ ०४८ ॥

घोररूपाः समाजग्मुर्भूतसंघाः समन्ततः ॥ ०४८ ॥

जनयेयुर्भयं ये स्म त्रैलोक्यस्यापि दर्शनात् ।
तान्प्रेक्षमाणोऽपि व्यथां न चकार महाबलः ॥ ०४९ ॥

अथ द्रौणिर्धनुष्पाणिर्बद्धगोधाङ्गुलित्रवान् ।
स्वयमेवात्मनात्मानमुपहारमुपाहरत् ॥ ०५० ॥

धनूंषि समिधस्तत्र पवित्राणि शिताः शराः ।
हविरात्मवतश्चात्मा तस्मिन्भारत कर्मणि ॥ ०५१ ॥

ततः सौम्येन मन्त्रेण द्रोणपुत्रः प्रतापवान् ।
उपहारं महामन्युरथात्मानमुपाहरत् ॥ ०५२ ॥

तं रुद्रं रौद्रकर्माणं रौद्रैः कर्मभिरच्युतम् ।
अभिष्टुत्य महात्मानमित्युवाच कृताञ्जलिः ॥ ०५३ ॥

इममात्मानमद्याहं जातमाङ्गिरसे कुले ।
अग्नौ जुहोमि भगवन्प्रतिगृह्णीष्व मां बलिम् ॥ ०५४ ॥

भवद्भक्त्या महादेव परमेण समाधिना ।
अस्यामापदि विश्वात्मन्नुपाकुर्मि तवाग्रतः ॥ ०५५ ॥

त्वयि सर्वाणि भूतानि सर्वभूतेषु चासि वै ।
गुणानां हि प्रधानानामेकत्वं त्वयि तिष्ठति ॥ ०५६ ॥

सर्वभूताशय विभो हविर्भूतमुपस्थितम् ।

प्रतिगृहाण मां देव यद्यशक्याः परे मया ॥ ०५७ ॥

इत्युक्त्वा द्रौणिरास्थाय तां वेदीं दीप्तपावकाम् ।
संत्यक्तात्मा समारुह्य कृष्णवर्त्मन्युपाविशत् ॥ ०५८ ॥

तमूर्ध्वबाहुं निश्चेष्टं दृष्ट्वा हविरुपस्थितम् ।
अब्रवीद्भगवान्साक्षान्महादेवो हसन्निव ॥ ०५९ ॥

सत्यशौचार्जवत्यागैस्तपसा नियमेन च ।
क्षान्त्या भक्त्या च धृत्या च बुद्ध्या च वचसा तथा ॥ ०६० ॥

यथावदहमाराद्धः कृष्णेनाक्लिष्टकर्मणा ।
तस्मादिष्टतमः कृष्णादन्यो मम न विद्यते ॥ ०६१ ॥

कुर्वता तस्य संमानं त्वां च जिज्ञासता मया ।
पाञ्चालाः सहसा गुप्ता मायाश्च बहुशः कृताः ॥ ०६२ ॥

कृतस्तस्यैष संमानः पाञ्चालान्रक्षता मया ।
अभिभूतास्तु कालेन नैषामद्यास्ति जीवितम् ॥ ०६३ ॥

एवमुक्त्वा महेष्वासं भगवानात्मनस्तनुम् ।
आविवेश ददौ चास्मै विमलं खड्गमुत्तमम् ॥ ०६४ ॥

अथाविष्टो भगवता भूयो जज्वाल तेजसा ।
वर्ष्मवांश्चाभवद्युद्धे देवसृष्टेन तेजसा ॥ ०६५ ॥

तमदृश्यानि भूतानि रक्षांसि च समाद्रवन् ।
अभितः शत्रुशिबिरं यान्तं साक्षादिवेश्वरम् ॥ ०६६ ॥

# अध्याय ००८

धृतराष्ट्र उवाच ॥

तथा प्रयाते शिबिरं द्रोणपुत्रे महारथे ।
कच्चित्कृपश्च भोजश्च भयार्तौ न न्यवर्तताम् ॥ ००१ ॥

कच्चिन्न वारितौ क्षुद्रै रक्षिभिर्नोपलक्षितौ ।
असह्यमिति वा मत्वा न निवृत्तौ महारथौ ॥ ००२ ॥

कच्चित्प्रमथ्य शिबिरं हत्वा सोमकपाण्डवान् ।
दुर्योधनस्य पदवीं गतौ परमिकां रणे ॥ ००३ ॥

पाञ्चालैर्वा विनिहतौ कच्चिन्नास्वपतां क्षितौ ।
कच्चित्ताभ्यां कृतं कर्म तन्ममाचक्ष्व सञ्जय ॥ ००४ ॥

सञ्जय उवाच ॥

तस्मिन्प्रयाते शिबिरं द्रोणपुत्रे महात्मनि ।
कृपश्च कृतवर्मा च शिबिरद्वार्यतिष्ठताम् ॥ ००५ ॥

अश्वत्थामा तु तौ दृष्ट्वा यत्नवन्तौ महारथौ ।
प्रहृष्टः शनकै राजन्निदं वचनमब्रवीत् ॥ ००६ ॥

यत्तौ भवन्तौ पर्याप्तौ सर्वक्षत्रस्य नाशने ।
किं पुनर्योधशेषस्य प्रसुप्तस्य विशेषतः ॥ ००७ ॥

अहं प्रवेक्ष्ये शिबिरं चरिष्यामि च कालवत् ।
यथा न कश्चिदपि मे जीवन्मुच्येत मानवः ॥ ००८ ॥

इत्युक्त्वा प्राविशद्द्रौणिः पार्थानां शिबिरं महत् ।

अद्वारेणाभ्यवस्कन्द्य विहाय भयमात्मनः ॥ ००९ ॥

स प्रविश्य महाबाहुरुद्देशज्ञश्च तस्य ह ।
धृष्टद्युम्नस्य निलयं शनकैरभ्युपागमत् ॥ ०१० ॥

ते तु कृत्वा महत्कर्म श्रान्ताश्च बलवद्रणे ।
प्रसुप्ता वै सुविश्वस्ताः स्वसैन्यपरिवारिताः ॥ ०११ ॥

अथ प्रविश्य तद्वेश्म धृष्टद्युम्नस्य भारत ।
पाञ्चाल्यं शयने द्रौणिरपश्यत्सुप्तमन्तिकात् ॥ ०१२ ॥

क्षौमावदाते महति स्पर्ध्यास्तरणसंवृते ।
माल्यप्रवरसंयुक्ते धूपैश्चूर्णैश्च वासिते ॥ ०१३ ॥

तं शयानं महात्मानं विस्रब्धमकुतोभयम् ।
प्राबोधयत पादेन शयनस्थं महीपते ॥ ०१४ ॥

स बुद्ध्वा चरणस्पर्शमुत्थाय रणदुर्मदः ।
अभ्यजानदमेयात्मा द्रोणपुत्रं महारथम् ॥ ०१५ ॥

तमुत्पतन्तं शयनादश्वत्थामा महाबलः ।
केशेष्वालम्ब्य पाणिभ्यां निष्पिपेष महीतले ॥ ०१६ ॥

स बलात्तेन निष्पिष्टः साध्वसेन च भारत ।
निद्रया चैव पाञ्चाल्यो नाशकच्चेष्टितुं तदा ॥ ०१७ ॥

तमाक्रम्य तदा राजन्कण्ठे चोरसि चोभयोः ।
नदन्तं विस्फुरन्तं च पशुमारममारयत् ॥ ०१८ ॥

तुदन्नखैस्तु स द्रौणिं नातिव्यक्तमुदाहरत् ।
आचार्यपुत्र शस्त्रेण जहि मा मा चिरं कृथाः ॥ ०१९ ॥

त्वत्कृते सुकृता.णल्लोकान्गाच्छेयं द्विपदां वर ॥ ०१९ ॥

तस्याव्यक्तां तु तां वाचं संश्रुत्य द्रौणिरब्रवीत् ।
आचार्यघातिनां लोका न सन्ति कुलपांसन ॥ ०२० ॥

तस्माच्छस्त्रेण निधनं न त्वमर्हसि दुर्मते ॥ ०२० ॥

एवं ब्रुवाणस्तं वीरं सिंहो मत्तमिव द्विपम् ।
मर्मस्वभ्यवधीत्क्रुद्धः पादाष्ठीलैः सुदारुणैः ॥ ०२१ ॥

तस्य वीरस्य शब्देन मार्यमाणस्य वेश्मनि ।
अबुध्यन्त महाराज स्त्रियो ये चास्य रक्षिणः ॥ ०२२ ॥

ते दृष्ट्वा वर्ष्मवन्तं तमतिमानुषविक्रमम् ।
भूतमेव व्यवस्यन्तो न स्म प्रव्याहरन्भयात् ॥ ०२३ ॥

तं तु तेनाभ्युपायेन गमयित्वा यमक्षयम् ।
अध्यतिष्ठत्स तेजस्वी रथं प्राप्य सुदर्शनम् ॥ ०२४ ॥

स तस्य भवनाद्राजन्निष्क्रम्यानादयन्दिशः ।
रथेन शिबिरं प्रायाज्जिघांसुर्द्विषतो बली ॥ ०२५ ॥

अपक्रान्ते ततस्तस्मिन्द्रोणपुत्रे महारथे ।
सह तै रक्षिभिः सर्वैः प्रणेदुर्योषितस्तदा ॥ ०२६ ॥

राजानं निहतं दृष्ट्वा भृशं शोकपरायणाः ।
व्याक्रोशन्क्षत्रियाः सर्वे धृष्टद्युम्नस्य भारत ॥ ०२७ ॥

तासां तु तेन शब्देन समीपे क्षत्रियर्षभाः ।
क्षिप्रं च समनह्यन्त किमेतदिति चाब्रुवन् ॥ ०२८ ॥

स्त्रियस्तु राजन्वित्रस्ता भारद्वाजं निरीक्ष्य तम् ।
अब्रुवन्दीनकण्ठेन क्षिप्रमाद्रवतेति वै ॥ ०२९ ॥

राक्षसो वा मनुष्यो वा नैनं जानीमहे वयम् ।
हत्वा पाञ्चालराजं यो रथमारुह्य तिष्ठति ॥ ०३० ॥

ततस्ते योधमुख्यास्तं सहसा पर्यवारयन् ।
स तानापततः सर्वान्रुद्रास्त्रेण व्यपोथयत् ॥ ०३१ ॥

धृष्टद्युम्नं च हत्वा स तांश्चैवास्य पदानुगान् ।
अपश्यच्छयने सुप्तमुत्तमौजसमन्तिके ॥ ०३२ ॥

तमप्याक्रम्य पादेन कण्ठे चोरसि चौजसा ।
तथैव मारयामास विनर्दन्तमरिंदमम् ॥ ०३३ ॥

युधामन्युस्तु संप्राप्तो मत्त्वा तं रक्षसा हतम् ।
गदामुद्यम्य वेगेन हृदि द्रौणिमताडयत् ॥ ०३४ ॥

तमभिद्रुत्य जग्राह क्षितौ चैनमपातयत् ।
विस्फुरन्तं च पशुवत्तथैवैनममारयत् ॥ ०३५ ॥

तथा स वीरो हत्वा तं ततोऽन्यान्समुपाद्रवत् ।
संसुप्तानेव राजेन्द्र तत्र तत्र महारथान् ॥ ०३६ ॥

स्फुरतो वेपमानांश्च शमितेव पशून्मखे ॥ ०३६ ॥

ततो निस्त्रिंशमादाय जघानान्यान्पृथग्जनान् ।
भागशो विचरन्मार्गानसियुद्धविशारदः ॥ ०३७ ॥

तथैव गुल्मे संप्रेक्ष्य शयानान्मध्यगौल्मिकान् ।

श्रान्तान्न्यस्तायुधान्सर्वान्क्षणेनैव व्यपोथयत् ॥ ०३८ ॥

योधानश्वान्द्विपांश्चैव प्राच्छिनत्स वरासिना ।
रुधिरोक्षितसर्वाङ्गः कालसृष्ट इवान्तकः ॥ ०३९ ॥

विस्फुरद्भिश्च तैर्द्रौणिर्निस्त्रिंशस्योद्यमेन च ।
आक्षेपेण तथैवासेस्त्रिधा रक्तोक्षितोऽभवत् ॥ ०४० ॥

तस्य लोहितसिक्तस्य दीप्तखड्गस्य युध्यतः ।
अमानुष इवाकारो बभौ परमभीषणः ॥ ०४१ ॥

ये त्वजाग्रत कौरव्य तेऽपि शब्देन मोहिताः ।
निरीक्ष्यमाणा अन्योन्यं द्रौणिं दृष्ट्वा प्रविव्यथुः ॥ ०४२ ॥

तद्रूपं तस्य ते दृष्ट्वा क्षत्रियाः शत्रुकर्शनाः ।
राक्षसं मन्यमानास्तं नयनानि न्यमीलयन् ॥ ०४३ ॥

स घोररूपो व्यचरत्कालवच्छिबिरे ततः ।
अपश्यद्द्रौपदीपुत्रानवशिष्टांश्च सोमकान् ॥ ०४४ ॥

तेन शब्देन वित्रस्ता धनुर्हस्ता महारथाः ।
धृष्टद्युम्नं हतं श्रुत्वा द्रौपदेया विशां पते ॥ ०४५ ॥

अवाकिरञ्शरव्रातैर्भारद्वाजमभीतवत् ॥ ०४५ ॥

ततस्तेन निनादेन संप्रबुद्धाः प्रभद्रकाः ।
शिलीमुखैः शिखण्डी च द्रोणपुत्रं समार्दयन् ॥ ०४६ ॥

भारद्वाजस्तु तान्दृष्ट्वा शरवर्षाणि वर्षतः ।
ननाद बलवन्नादं जिघांसुस्तान्सुदुर्जयान् ॥ ०४७ ॥

ततः परमसङ्क्रुद्धः पितुर्वधमनुस्मरन् ।
अवरुह्य रथोपस्थात्त्वरमाणोऽभिदुद्रुवे ॥ ०४८ ॥

सहस्रचन्द्रं विपुलं गृहीत्वा चर्म संयुगे ।
खड्गं च विपुलं दिव्यं जातरूपपरिष्कृतम् ॥ ०४९ ॥

द्रौपदेयानभिद्रुत्य खड्गेन व्यचरद्बली ॥ ०४९ ॥

ततः स नरशार्दूलः प्रतिविन्ध्यं तमाहवे ।
कुक्षिदेशेऽवधीद्राजन्स हतो न्यपतद्भुवि ॥ ०५० ॥

प्रासेन विद्ध्वा द्रौणिं तु सुतसोमः प्रतापवान् ।
पुनश्चासिं समुद्यम्य द्रोणपुत्रमुपाद्रवत् ॥ ०५१ ॥

सुतसोमस्य सासिं तु बाहुं छित्त्वा नरर्षभः ।
पुनरभ्यहनत्पार्श्वे स भिन्नहृदयोऽपतत् ॥ ०५२ ॥

नाकुलिस्तु शतानीको रथचक्रेण वीर्यवान् ।
दोर्भ्यामुत्क्षिप्य वेगेन वक्षस्येनमताडयत् ॥ ०५३ ॥

अताडयच्छतानीकं मुक्तचक्रं द्विजस्तु सः ।
स विह्वलो ययौ भूमिं ततोऽस्यापाहरच्छिरः ॥ ०५४ ॥

श्रुतकर्मा तु परिघं गृहीत्वा समताडयत् ।
अभिद्रुत्य ततो द्रौणिं सव्ये स फलके भृशम् ॥ ०५५ ॥

स तु तं श्रुतकर्माणमास्ये जघ्ने वरासिना ।
स हतो न्यपतद्भूमौ विमूढो विकृताननः ॥ ०५६ ॥

तेन शब्देन वीरस्तु श्रुतकीर्तिर्महाधनुः ।
अश्वत्थामानमासाद्य शरवर्षैरवाकिरत् ॥ ०५७ ॥

तस्यापि शरवर्षाणि चर्मणा प्रतिवार्य सः ।
सकुण्डलं शिरः कायाद्भ्राजमानमपाहरत् ॥ ०५८ ॥

ततो भीष्मनिहन्ता तं सह सर्वैः प्रभद्रकैः ।
अहनत्सर्वतो वीरं नानाप्रहरणैर्बली ॥ ०५९ ॥

शिलीमुखेन चाप्येनं भ्रुवोर्मध्ये समार्दयत् ॥ ०५९ ॥

स तु क्रोधसमाविष्टो द्रोणपुत्रो महाबलः ।
शिखण्डिनं समासाद्य द्विधा चिच्छेद सोऽसिना ॥ ०६० ॥

शिखण्डिनं ततो हत्वा क्रोधाविष्टः परंतपः ।
प्रभद्रकगणान्सर्वानभिदुद्राव वेगवान् ॥ ०६१ ॥

यच्च शिष्टं विराटस्य बलं तच्च समाद्रवत् ॥ ०६१ ॥

द्रुपदस्य च पुत्राणां पौत्राणां सुहृदामपि ।
चकार कदनं घोरं दृष्ट्वा दृष्ट्वा महाबलः ॥ ०६२ ॥

अन्यानन्यांश्च पुरुषानभिसृत्याभिसृत्य च ।
न्यकृन्तदसिना द्रौणिरसिमार्गविशारदः ॥ ०६३ ॥

कालीं रक्तास्यनयनां रक्तमाल्यानुलेपनाम् ।
रक्ताम्बरधरामेकां पाशहस्तां शिखण्डिनीम् ॥ ०६४ ॥

ददृशुः कालरात्रिं ते स्मयमानामवस्थिताम् ।
नराश्वकुञ्जरान्पाशैर्बद्ध्वा घोरैः प्रतस्थुषीम् ॥ ०६५ ॥

हरन्तीं विविधान्प्रेतान्पाशबद्धान्विमूर्धजान् ॥ ०६५ ॥

स्वप्ने सुप्तान्नयन्तीं तां रात्रिष्वन्यासु मारिष ।
ददृशुर्योधमुख्यास्ते घ्नन्तं द्रौणिं च नित्यदा ॥ ०६६ ॥

यतः प्रवृत्तः सङ्ग्रामः कुरुपाण्डवसेनयोः ।
ततः प्रभृति तां कृत्यामपश्यन्द्रौणिमेव च ॥ ०६७ ॥

तांस्तु दैवहतान्पूर्वं पश्चाद्द्रौणिर्न्यपातयत् ।
त्रासयन्सर्वभूतानि विनदन्भैरवान्रवान् ॥ ०६८ ॥

तदनुस्मृत्य ते वीरा दर्शनं पौर्वकालिकम् ।
इदं तदित्यमन्यन्त दैवेनोपनिपीडिताः ॥ ०६९ ॥

ततस्तेन निनादेन प्रत्यबुध्यन्त धन्विनः ।
शिबिरे पाण्डवेयानां शतशोऽथ सहस्रशः ॥ ०७० ॥

सोऽच्छिनत्कस्यचित्पादौ जघनं चैव कस्यचित् ।
कांश्चिद्बिभेद पार्श्वेषु कालसृष्ट इवान्तकः ॥ ०७१ ॥

अत्युग्रप्रतिपिष्टैश्च नदद्भिश्च भृशातुरैः ।
गजाश्वमथितैश्चान्यैर्मही कीर्णाभवत्प्रभो ॥ ०७२ ॥

क्रोशतां किमिदं कोऽयं किं शब्दः किं नु किं कृतम् ।
एवं तेषां तदा द्रौणिरन्तकः समपद्यत ॥ ०७३ ॥

अपेतशस्त्रसंनाहान्संरब्धान्पाण्डुसृञ्जयान् ।
प्राहिणोन्मृत्युलोकाय द्रौणिः प्रहरतां वरः ॥ ०७४ ॥

ततस्तच्छस्त्रवित्रस्ता उत्पतन्तो भयातुराः ।
निद्रान्धा नष्टसञ्ज्ञाश्च तत्र तत्र निलिल्यिरे ॥ ०७५ ॥

ऊरुस्तम्भगृहीताश्च कश्मलाभिहतौजसः ।

विनदन्तो भृशं त्रस्ताः संन्यपेषन्परस्परम् ॥ ०७६ ॥

ततो रथं पुनर्द्रौणिरास्थितो भीमनिस्वनम् ।
धनुष्पाणिः शरैरन्यान्प्रेषयद्वै यमक्षयम् ॥ ०७७ ॥

पुनरुत्पततः कांश्चिद्दूरादपि नरोत्तमान् ।
शूरान्संपततश्चान्यान्कालरात्र्यै न्यवेदयत् ॥ ०७८ ॥

तथैव स्यन्दनाग्रेण प्रमथन्स विधावति ।
शरवर्षैश्च विविधैरवर्षच्छात्रवांस्ततः ॥ ०७९ ॥

पुनश्च सुविचित्रेण शतचन्द्रेण चर्मणा ।
तेन चाकाशवर्णेन तदाचरत सोऽसिना ॥ ०८० ॥

तथा स शिबिरं तेषां द्रौणिराहवदुर्मदः ।
व्यक्षोभयत राजेन्द्र महाह्रदमिव द्विपः ॥ ०८१ ॥

उत्पेतुस्तेन शब्देन योधा राजन्विचेतसः ।
निद्रार्ताश्च भयार्ताश्च व्यधावन्त ततस्ततः ॥ ०८२ ॥

विस्वरं चुक्रुशुश्चान्ये बह्वबद्धं तथावदन् ।
न च स्म प्रतिपद्यन्ते शस्त्राणि वसनानि च ॥ ०८३ ॥

विमुक्तकेशाश्चाप्यन्ये नाभ्यजानन्परस्परम् ।
उत्पतन्तः परे भीताः केचित्तत्र तथाभ्रमन् ॥ ०८४ ॥

पुरीषमसृजन्केचित्केचिन्मूत्रं प्रसुस्रुवुः ॥ ०८४ ॥

बन्धनानि च राजेन्द्र संछिद्य तुरगा द्विपाः ।
समं पर्यपतंश्चान्ये कुर्वन्तो महदाकुलम् ॥ ०८५ ॥

तत्र केचिन्नरा भीता व्यलीयन्त महीतले ।
तथैव तान्निपतितानपिंषन्गजवाजिनः ॥ ०८६ ॥

तस्मिंस्तथा वर्तमाने रक्षांसि पुरुषर्षभ ।
तृप्तानि व्यनदन्नुच्चैर्मुदा भरतसत्तम ॥ ०८७ ॥

स शब्दः प्रेरितो राजन्भूतसंघैर्मुदा युतैः ।
अपूरयद्दिशः सर्वा दिवं चापि महास्वनः ॥ ०८८ ॥

तेषामार्तस्वरं श्रुत्वा वित्रस्ता गजवाजिनः ।
मुक्ताः पर्यपतन्राजन्मृद्नन्तः शिबिरे जनम् ॥ ०८९ ॥

तैस्तत्र परिधावद्भिश्चरणोदीरितं रजः ।
अकरोच्छिबिरे तेषां रजन्यां द्विगुणं तमः ॥ ०९० ॥

तस्मिंस्तमसि सञ्जाते प्रमूढाः सर्वतो जनाः ।
नाजानन्पितरः पुत्रान्भ्रातॄन्भ्रातर एव च ॥ ०९१ ॥

गजा गजानतिक्रम्य निर्मनुष्या हया हयान् ।
अताडयंस्तथाभञ्जंस्तथामृद्नंश्च भारत ॥ ०९२ ॥

ते भग्नाः प्रपतन्तश्च निघ्नन्तश्च परस्परम् ।
न्यपातयन्त च परान्पातयित्वा तथापिषन् ॥ ०९३ ॥

विचेतसः सनिद्राश्च तमसा चावृता नराः ।
जघ्नुः स्वानेव तत्राथ कालेनाभिप्रचोदिताः ॥ ०९४ ॥

त्यक्त्वा द्वाराणि च द्वाःस्थास्तथा गुल्मांश्च गौल्मिकाः ।
प्राद्रवन्त यथाशक्ति कांदिशीका विचेतसः ॥ ०९५ ॥

विप्रनष्टाश्च तेऽन्योन्यं नाजानन्त तदा विभो ।

क्रोशन्तस्तात पुत्रेति दैवोपहतचेतसः ॥ ०९६ ॥

पलायतां दिशस्तेषां स्वानप्युत्सृज्य बान्धवान् ।
गोत्रनामभिरन्योन्यमाक्रन्दन्त ततो जनाः ॥ ०९७ ॥

हाहाकारं च कुर्वाणाः पृथिव्यां शेरते परे ।
तान्बुद्धा रणमत्तोऽसौ द्रोणपुत्रो व्यपोथयत् ॥ ०९८ ॥

तत्रापरे वध्यमाना मुहुर्मुहुरचेतसः ।
शिबिरान्निष्पतन्ति स्म क्षत्रिया भयपीडिताः ॥ ०९९ ॥

तांस्तु निष्पततस्त्रस्ताञ्शिबिराज्जीवितैषिणः ।
कृतवर्मा कृपश्चैव द्वारदेशे निजघ्नतुः ॥ १०० ॥

विशस्त्रयन्त्रकवचान्मुक्तकेशान्कृताञ्जलीन् ।
वेपमानान्क्षितौ भीतान्नैव कांश्चिदमुञ्चताम् ॥ १०१ ॥

नामुच्यत तयोः कश्चिन्निष्क्रान्तः शिबिराद्बहिः ।
कृपस्य च महाराज हार्दिक्यस्य च दुर्मतेः ॥ १०२ ॥

भूयश्चैव चिकीर्षन्तौ द्रोणपुत्रस्य तौ प्रियम् ।
त्रिषु देशेषु ददतुः शिबिरस्य हुताशनम् ॥ १०३ ॥

ततः प्रकाशे शिबिरे खड्गेन पितृनन्दनः ।
अश्वत्थामा महाराज व्यचरत्कृतहस्तवत् ॥ १०४ ॥

कांश्चिदापततो वीरानपरांश्च प्रधावतः ।
व्ययोजयत खड्गेन प्राणैर्द्विजवरो नरान् ॥ १०५ ॥

कांश्चिद्योधान्स खड्गेन मध्ये संछिद्य वीर्यवान् ।
अपातयद्द्रोणसुतः संरब्धस्तिलकाण्डवत् ॥ १०६ ॥

विनदद्भिर्भृशायस्तैर्नराश्वद्विरदोत्तमैः ।
पतितैरभवत्कीर्णा मेदिनी भरतर्षभ ॥ १०७ ॥

मानुषाणां सहस्रेषु हतेषु पतितेषु च ।
उदतिष्ठन्कबन्धानि बहून्युत्थाय चापतन् ॥ १०८ ॥

सायुधान्साङ्गदान्बाहून्निचकर्त शिरांसि च ।
हस्तिहस्तोपमानूरून्हस्तान्पादांश्च भारत ॥ १०९ ॥

पृष्ठच्छिन्नाञ्शिरश्छिन्नान्पार्श्वच्छिन्नांस्तथापरान् ।
समासाद्याकरोद्द्रौणिः कांश्चिच्चापि पराङ्मुखान् ॥ ११० ॥

मध्यकायान्नरानन्यांश्चिच्छेदान्यांश्च कर्णतः ।
अंसदेशे निहत्यान्यान्काये प्रावेशयच्छिरः ॥ १११ ॥

एवं विचरतस्तस्य निघ्नतः सुबहून्नरान् ।
तमसा रजनी घोरा बभौ दारुणदर्शना ॥ ११२ ॥

किञ्चित्प्राणैश्च पुरुषैर्हतैश्चान्यैः सहस्रशः ।
बहुना च गजाश्वेन भूरभूद्भीमदर्शना ॥ ११३ ॥

यक्षरक्षःसमाकीर्णे रथाश्वद्विपदारुणे ।
क्रुद्धेन द्रोणपुत्रेण संछिन्नाः प्रापतन्भुवि ॥ ११४ ॥

मातृरन्ये पितृनन्ये भ्रातृनन्ये विचुक्रुशुः ।
केचिदूचुर्न तत्क्रुद्धैर्धार्तराष्ट्रैः कृतं रणे ॥ ११५ ॥

यत्कृतं नः प्रसुप्तानां रक्षोभिः क्रूरकर्मभिः ।
असांनिध्याद्धि पार्थानामिदं नः कदनं कृतम् ॥ ११६ ॥

न देवासुरगन्धर्वैर्न यक्षैर्न च राक्षसैः ।
शक्यो विजेतुं कौन्तेयो गोप्ता यस्य जनार्दनः ॥ ११७ ॥

ब्रह्मण्यः सत्यवाग्दान्तः सर्वभूतानुकम्पकः ।
न च सुप्तं प्रमत्तं वा न्यस्तशस्त्रं कृताञ्जलिम् ॥ ११८ ॥

धावन्तं मुक्तकेशं वा हन्ति पार्थो धनञ्जयः ॥ ११८ ॥

तदिदं नः कृतं घोरं रक्षोभिः क्रूरकर्मभिः ।
इति लालप्यमानाः स्म शेरते बहवो जनाः ॥ ११९ ॥

स्तनतां च मनुष्याणामपरेषां च कूजताम् ।
ततो मुहूर्तात्प्राशाम्यत्स शब्दस्तुमुलो महान् ॥ १२० ॥

शोणितव्यतिषिक्तायां वसुधायां च भूमिप ।
तद्रजस्तुमुलं घोरं क्षणेनान्तरधीयत ॥ १२१ ॥

संवेष्टमानानुद्विग्नान्निरुत्साहान्सहस्रशः ।
न्यपातयन्नरान्क्रुद्धः पशून्पशुपतिर्यथा ॥ १२२ ॥

अन्योन्यं संपरिष्वज्य शयानान्द्रवतोऽपरान् ।
संलीनान्युध्यमानांश्च सर्वान्द्रौणिरपोथयत् ॥ १२३ ॥

दह्यमाना हुताशेन वध्यमानाश्च तेन ते ।
परस्परं तदा योधा अनयन्यमसादनम् ॥ १२४ ॥

तस्या रजन्यास्त्वर्धेन पाण्डवानां महद्बलम् ।
गमयामास राजेन्द्र द्रौणिर्यमनिवेशनम् ॥ १२५ ॥

निशाचराणां सत्त्वानां स रात्रिर्हर्षवर्धिनी ।
आसीन्नरगजाश्वानां रौद्री क्षयकरी भृशम् ॥ १२६ ॥

तत्रादृश्यन्त रक्षांसि पिशाचाश्च पृथग्विधाः ।
खादन्तो नरमांसानि पिबन्तः शोणितानि च ॥ १२७ ॥

करालाः पिङ्गला रौद्राः शैलदन्ता रजस्वलाः ।
जटिला दीर्घसक्थाश्च पञ्चपादा महोदराः ॥ १२८ ॥

पश्चादङ्गुलयो रूक्षा विरूपा भैरवस्वनाः ।
घटजानवोऽतिह्रस्वाश्च नीलकण्ठा विभीषणाः ॥ १२९ ॥

सपुत्रदाराः सुक्रूरा दुर्दर्शनसुनिर्घृणाः ।
विविधानि च रूपाणि तत्रादृश्यन्त रक्षसाम् ॥ १३० ॥

पीत्वा च शोणितं हृष्टाः प्रानृत्यन्गणशोऽपरे ।
इदं वरमिदं मेध्यमिदं स्वाद्विति चाब्रुवन् ॥ १३१ ॥

मेदोमज्जास्थिरक्तानां वसानां च भृशासिताः ।
परमांसानि खादन्तः क्रव्यादा मांसजीविनः ॥ १३२ ॥

वसां चाप्यपरे पीत्वा पर्यधावन्विकुक्षिलाः ।
नानावक्त्रास्तथा रौद्राः क्रव्यादाः पिशिताशिनः ॥ १३३ ॥

अयुतानि च तत्रासन्प्रयुतान्यर्बुदानि च ।
रक्षसां घोररूपाणां महतां क्रूरकर्मणाम् ॥ १३४ ॥

मुदितानां वितृप्तानां तस्मिन्महति वैशसे ।
समेतानि बहून्यासन्भूतानि च जनाधिप ॥ १३५ ॥

प्रत्यूषकाले शिबिरात्प्रतिगन्तुमियेष सः ।
नृशोणितावसिक्तस्य द्रौणेरासीदसित्सरुः ॥ १३६ ॥

पाणिना सह संश्लिष्ट एकीभूत इव प्रभो ॥ १३६ ॥

स निःशेषानरीन्कृत्वा विरराज जनक्षये ।
युगान्ते सर्वभूतानि भस्म कृत्वेव पावकः ॥ १३७ ॥

यथाप्रतिज्ञं तत्कर्म कृत्वा द्रौणायनिः प्रभो ।
दुर्गमां पदवीं कृत्वा पितुरासीद्गतज्वरः ॥ १३८ ॥

यथैव संसुप्तजने शिबिरे प्राविशन्निशि ।
तथैव हत्वा निःशब्दे निश्चक्राम नरर्षभः ॥ १३९ ॥

निष्क्रम्य शिबिरात्तस्मात्ताभ्यां सङ्गम्य वीर्यवान् ।
आचख्यौ कर्म तत्सर्वं हृष्टः संहर्षयन्विभो ॥ १४० ॥

तावप्याचख्यतुस्तस्मै प्रियं प्रियकरौ तदा ।
पाञ्चालान्सृञ्जयांश्चैव विनिकृत्तान्सहस्रशः ॥ १४१ ॥

प्रीत्या चोच्चैरुदक्रोशंस्तथैवास्फोटयंस्तलान् ॥ १४१ ॥

एवंविधा हि सा रात्रिः सोमकानां जनक्षये ।
प्रसुप्तानां प्रमत्तानामासीत्सुभृशदारुणा ॥ १४२ ॥

असंशयं हि कालस्य पर्यायो दुरतिक्रमः ।
तादृशा निहता यत्र कृत्वास्माकं जनक्षयम् ॥ १४३ ॥

धृतराष्ट्र उवाच ॥

प्रागेव सुमहत्कर्म द्रौणिरेतन्महारथः ।
नाकरोदीदृशं कस्मान्मत्पुत्रविजये धृतः ॥ १४४ ॥

अथ कस्माद्धते क्षत्रे कर्मेदं कृतवानसौ ।

द्रोणपुत्रो महेष्वासस्तन्मे शंसितुमर्हसि ॥ १४५ ॥

सञ्जय उवाच ॥

तेषां नूनं भयान्नासौ कृतवान्कुरुनन्दन ।
असांनिध्याद्धि पार्थानां केशवस्य च धीमतः ॥ १४६ ॥

सात्यकेश्चापि कर्मेदं द्रोणपुत्रेण साधितम् ।
न हि तेषां समक्षं तान्हन्यादपि मरुत्पतिः ॥ १४७ ॥

एतदीदृशकं वृत्तं राजन्सुप्तजने विभो ।
ततो जनक्षयं कृत्वा पाण्डवानां महात्ययम् ॥ १४८ ॥

दिष्ट्या दिष्ट्येति चान्योन्यं समेत्योचुर्महारथाः ॥ १४८ ॥

पर्यष्वजत्ततो द्रौणिस्ताभ्यां च प्रतिनन्दितः ।
इदं हर्षाच्च सुमहदाददे वाक्यमुत्तमम् ॥ १४९ ॥

पाञ्चाला निहताः सर्वे द्रौपदेयाश्च सर्वशः ।
सोमका मत्स्यशेषाश्च सर्वे विनिहता मया ॥ १५० ॥

इदानीं कृतकृत्याः स्म याम तत्रैव माचिरम् ।
यदि जीवति नो राजा तस्मै शंसामहे प्रियम् ॥ १५१ ॥

---

# अध्याय ००९

सञ्जय उवाच ॥

ते हत्वा सर्वपाञ्चालान्द्रौपदेयांश्च सर्वशः ।
अगच्छन्सहितास्तत्र यत्र दुर्योधनो हतः ॥ ००१ ॥

गत्वा चैनमपश्यंस्ते किञ्चित्प्राणं नराधिपम् ।
ततो रथेभ्यः प्रस्कन्द्य परिवव्रुस्तवात्मजम् ॥ ००२ ॥

तं भग्नसक्थं राजेन्द्र कृच्छ्रप्राणमचेतसम् ।
वमन्तं रुधिरं वक्त्रादपश्यन्वसुधातले ॥ ००३ ॥

वृतं समन्ताद्बहुभिः श्वापदैर्घोरदर्शनैः ।
शालावृकगणैश्चैव भक्षयिष्यद्भिरन्तिकात् ॥ ००४ ॥

निवारयन्तं कृच्छ्रात्ताञ्श्वापदान्सञ्चिखादिषून् ।
विवेष्टमानं मह्यां च सुभृशं गाढवेदनम् ॥ ००५ ॥

तं शयानं महात्मानं भूमौ स्वरुधिरोक्षितम् ।
हतशिष्टास्त्रयो वीराः शोकार्ताः पर्यवारयन् ॥ ००६ ॥

अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः ॥ ००६ ॥

तैस्त्रिभिः शोणितादिग्धैर्निःश्वसद्भिर्महारथैः ।
शुशुभे संवृतो राजा वेदी त्रिभिरिवाग्निभिः ॥ ००७ ॥

ते तं शयानं संप्रेक्ष्य राजानमतथोचितम् ।
अविषह्येन दुःखेन ततस्ते रुरुदुस्त्रयः ॥ ००८ ॥

ततस्ते रुधिरं हस्तैर्मुखान्निर्मृज्य तस्य ह ।
रणे राज्ञः शयानस्य कृपणं पर्यदेवयन् ॥ ००९ ॥

कृप उवाच ॥

न दैवस्यातिभारोऽस्ति यदयं रुधिरोक्षितः ।
एकादशचमूभर्ता शेते दुर्योधनो हतः ॥ ०१० ॥

पश्य चामीकराभस्य चामीकरविभूषिताम् ।
गदां गदाप्रियस्येमां समीपे पतितां भुवि ॥ ०११ ॥

इयमेनं गदा शूरं न जहाति रणे रणे ।
स्वर्गायापि व्रजन्तं हि न जहाति यशस्विनम् ॥ ०१२ ॥

पश्येमां सह वीरेण जाम्बूनदविभूषिताम् ।
शयानां शयने धर्मे भार्यां प्रीतिमतीमिव ॥ ०१३ ॥

यो वै मूर्धावसिक्तानामग्रे यातः परंतपः ।
स हतो ग्रसते पांसून्पश्य कालस्य पर्ययम् ॥ ०१४ ॥

येनाजौ निहता भूमावशेरत पुरा द्विषः ।
स भूमौ निहतः शेते कुरुराजः परैरयम् ॥ ०१५ ॥

भयान्नमन्ति राजानो यस्य स्म शतसंघशः ।
स वीरशयने शेते क्रव्याद्भिः परिवारितः ॥ ०१६ ॥

उपासत नृपाः पूर्वमर्थहेतोर्यमीश्वरम् ।
धिक्सद्यो निहतः शेते पश्य कालस्य पर्ययम् ॥ ०१७ ॥

सञ्जय उवाच ॥

तं शयानं नृपश्रेष्ठं ततो भरतसत्तम ।
अश्वत्थामा समालोक्य करुणं पर्यदेवयत् ॥ ०१८ ॥

आहुस्त्वां राजशार्दूल मुख्यं सर्वधनुष्मताम् ।
धनाध्यक्षोपमं युद्धे शिष्यं सङ्कर्षणस्य ह ॥ ०१९ ॥

कथं विवरमद्राक्षीद्भीमसेनस्तवानघ ।
बलिनः कृतिनो नित्यं स च पापात्मवान्नृप ॥ ०२० ॥

कालो नूनं महाराज लोकेऽस्मिन्बलवत्तरः ।
पश्यामो निहतं त्वां चेद्भीमसेनेन संयुगे ॥ ०२१ ॥

कथं त्वां सर्वधर्मज्ञं क्षुद्रः पापो वृकोदरः ।
निकृत्या हतवान्मन्दो नूनं कालो दुरत्ययः ॥ ०२२ ॥

धर्मयुद्धे ह्यधर्मेण समाहूयौजसा मृधे ।
गदया भीमसेनेन निर्भिन्ने सक्थिनी तव ॥ ०२३ ॥

अधर्मेण हतस्याजौ मृद्यमानं पदा शिरः ।
यदुपेक्षितवान्क्षुद्रो धिक्तमस्तु युधिष्ठिरम् ॥ ०२४ ॥

युद्धेष्वपवदिष्यन्ति योधा नूनं वृकोदरम् ।
यावत्स्थास्यन्ति भूतानि निकृत्या ह्यसि पातितः ॥ ०२५ ॥

ननु रामोऽब्रवीद्राजंस्त्वां सदा यदुनन्दनः ।
दुर्योधनसमो नास्ति गदया इति वीर्यवान् ॥ ०२६ ॥

श्लाघते त्वां हि वार्ष्णेयो राजन्संसत्सु भारत ।
सुशिष्यो मम कौरव्यो गदायुद्ध इति प्रभो ॥ ०२७ ॥

यां गतिं क्षत्रियस्याहुः प्रशस्तां परमर्षयः ।
हतस्याभिमुखस्याजौ प्राप्तस्त्वमसि तां गतिम् ॥ ०२८ ॥

दुर्योधन न शोचामि त्वामहं पुरुषर्षभ ।
हतपुत्रां तु शोचामि गान्धारीं पितरं च ते ॥ ०२९ ॥

भिक्षुकौ विचरिष्येते शोचन्तौ पृथिवीमिमाम्  ॥ ०२९  ॥

धिगस्तु कृष्णं वार्ष्णेयमर्जुनं चापि दुर्मतिम् ।
धर्मज्ञमानिनौ यौ त्वां वध्यमानमुपेक्षताम्  ॥ ०३०  ॥

पाण्डवाश्चापि ते सर्वे किं वक्ष्यन्ति नराधिपान् ।
कथं दुर्योधनोऽस्माभिर्हत इत्यनपत्रपाः  ॥ ०३१  ॥

धन्यस्त्वमसि गान्धारे यस्त्वमायोधने हतः ।
प्रयातोऽभिमुखः शत्रून्धर्मेण पुरुषर्षभ  ॥ ०३२  ॥

हतपुत्रा हि गान्धारी निहतज्ञातिबान्धवा ।
प्रज्ञाचक्षुश्च दुर्धर्षः कां गतिं प्रतिपत्स्यते  ॥ ०३३  ॥

धिगस्तु कृतवर्माणं मां कृपं च महारथम् ।
ये वयं न गताः स्वर्गं त्वां पुरस्कृत्य पार्थिवम्  ॥ ०३४  ॥

दातारं सर्वकामानां रक्षितारं प्रजाहितम् ।
यद्वयं नानुगच्छामस्त्वां धिगस्मान्नराधमान्  ॥ ०३५  ॥

कृपस्य तव वीर्येण मम चैव पितुश्च मे ।
सभृत्यानां नरव्याघ्र रत्नवन्ति गृहाणि च  ॥ ०३६  ॥

भवत्प्रसादादस्माभिः समित्रैः सहबान्धवैः ।
अवाप्ताः क्रतवो मुख्या बहवो भूरिदक्षिणाः  ॥ ०३७  ॥

कुतश्चापीदृशं सार्थमुपलप्स्यामहे वयम् ।
यादृशेन पुरस्कृत्य त्वं गतः सर्वपार्थिवान्  ॥ ०३८  ॥

वयमेव त्रयो राजन्गच्छन्तं परमां गतिम् ।
यद्वै त्वां नानुगच्छामस्तेन तप्स्यामहे वयम्  ॥ ०३९  ॥

त्वत्स्वर्गहीना हीनार्थाः स्मरन्तः सुकृतस्य ते ।
किं नाम तद्भवेत्कर्म येन त्वानुव्रजेम वै ॥ ०४० ॥

दुःखं नूनं कुरुश्रेष्ठ चरिष्यामो महीमिमाम् ।
हीनानां नस्त्वया राजन्कुतः शान्तिः कुतः सुखम् ॥ ०४१ ॥

गत्वैतांस्तु महाराज समेत्य त्वं महारथान् ।
यथाश्रेष्ठं यथाज्येष्ठं पूजयेर्वचनान्मम ॥ ०४२ ॥

आचार्यं पूजयित्वा च केतुं सर्वधनुष्मताम् ।
हतं मयाद्य शंसेथा धृष्टद्युम्नं नराधिप ॥ ०४३ ॥

परिष्वजेथा राजानं बाह्लिकं सुमहारथम् ।
सैन्धवं सोमदत्तं च भूरिश्रवसमेव च ॥ ०४४ ॥

तथा पूर्वगतानन्यान्स्वर्गं पार्थिवसत्तमान् ।
अस्मद्वाक्यात्परिष्वज्य पृच्छेथास्त्वमनामयम् ॥ ०४५ ॥

इत्येवमुक्त्वा राजानं भग्नसक्थमचेतसम् ।
अश्वत्थामा समुद्वीक्ष्य पुनर्वचनमब्रवीत् ॥ ०४६ ॥

दुर्योधन जीवसि चेद्वाचं श्रोत्रसुखां शृणु ।
सप्त पाण्डवतः शेषा धार्तराष्ट्रास्त्रयो वयम् ॥ ०४७ ॥

ते चैव भ्रातरः पञ्च वासुदेवोऽथ सात्यकिः ।
अहं च कृतवर्मा च कृपः शारद्वतस्तथा ॥ ०४८ ॥

द्रौपदेया हताः सर्वे धृष्टद्युम्नस्य चात्मजाः ।
पाञ्चाला निहताः सर्वे मत्स्यशेषं च भारत ॥ ०४९ ॥

कृते प्रतिकृतं पश्य हतपुत्रा हि पाण्डवाः ।
सौप्तिके शिबिरं तेषां हतं सनरवाहनम् ॥ ०५० ॥

मया च पापकर्मासौ धृष्टद्युम्नो महीपते ।
प्रविश्य शिबिरं रात्रौ पशुमारेण मारितः ॥ ०५१ ॥

दुर्योधनस्तु तां वाचं निशम्य मनसः प्रियाम् ।
प्रतिलभ्य पुनश्चेत इदं वचनमब्रवीत् ॥ ०५२ ॥

न मेऽकरोत्तद्गाङ्गेयो न कर्णो न च ते पिता ।
यत्त्वया कृपभोजाभ्यां सहितेनाद्य मे कृतम् ॥ ०५३ ॥

स चेत्सेनापतिः क्षुद्रो हतः सार्धं शिखण्डिना ।
तेन मन्ये मघवता सममात्मानमद्य वै ॥ ०५४ ॥

स्वस्ति प्राप्नुत भद्रं वः स्वर्गे नः सङ्गमः पुनः ।
इत्येवमुक्त्वा तूष्णीं स कुरुराजो महामनाः ॥ ०५५ ॥

प्राणानुदसृजद्वीरः सुहृदां शोकमादधत् ॥ ०५५ ॥

तथेति ते परिष्वक्ताः परिष्वज्य च तं नृपम् ।
पुनः पुनः प्रेक्षमाणाः स्वकानारुरुहू रथान् ॥ ०५६ ॥

इत्येवं तव पुत्रस्य निशम्य करुणां गिरम् ।
प्रत्यूषकाले शोकार्तः प्राधावं नगरं प्रति ॥ ०५७ ॥

तव पुत्रे गते स्वर्गं शोकार्तस्य ममानघ ।
ऋषिदत्तं प्रनष्टं तद्दिव्यदर्शित्वमद्य वै ॥ ०५८ ॥

वैशंपायन उवाच ॥

इति श्रुत्वा स नृपतिः पुत्रज्ञातिवधं तदा ।
निःश्वस्य दीर्घमुष्णं च ततश्चिन्तापरोऽभवत् ॥ ०५९ ॥

---

# ऐषीकपर्व

## अध्याय ०१०

वैशंपायन उवाच ॥

तस्यां रात्र्यां व्यतीतायां धृष्टद्युम्नस्य सारथिः ।
शशंस धर्मराजाय सौप्तिके कदनं कृतम् ॥ ००१ ॥

द्रौपदेया महाराज द्रुपदस्यात्मजैः सह ।
प्रमत्ता निशि विश्वस्ताः स्वपन्तः शिबिरे स्वके ॥ ००२ ॥

कृतवर्मणा नृशंसेन गौतमेन कृपेण च ।
अश्वत्थाम्ना च पापेन हतं वः शिबिरं निशि ॥ ००३ ॥

एतैर्नरगजाश्वानां प्रासशक्तिपरश्वधैः ।
सहस्राणि निकृन्तद्भिर्निःशेषं ते बलं कृतम् ॥ ००४ ॥

छिद्यमानस्य महतो वनस्येव परश्वधैः ।
शुश्रुवे सुमहाञ्शब्दो बलस्य तव भारत ॥ ००५ ॥

अहमेकोऽवशिष्टस्तु तस्मात्सैन्यान्महीपते ।
मुक्तः कथञ्चिद्धर्मात्मन्व्यग्रस्य कृतवर्मणः ॥ ००६ ॥

तच्छ्रुत्वा वाक्यमशिवं कुन्तीपुत्रो युधिष्ठिरः ।
पपात मह्यां दुर्धर्षः पुत्रशोकसमन्वितः ॥ ००७ ॥

तं पतन्तमभिक्रम्य परिजग्राह सात्यकिः ।
भीमसेनोऽर्जुनश्चैव माद्रीपुत्रौ च पाण्डवौ ॥ ००८ ॥

लब्धचेतास्तु कौन्तेयः शोकविह्वलया गिरा ।
जित्वा शत्रूञ्जितः पश्चात्पर्यदेवयदातुरः ॥ ००९ ॥

दुर्विदा गतिरर्थानामपि ये दिव्यचक्षुषः ।
जीयमाना जयन्त्यन्ये जयमाना वयं जिताः ॥ ०१० ॥

हत्वा भ्रातॄन्वयस्यांश्च पितॄन्पुत्रान्सुहृद्गणान् ।
बन्धूनमात्यान्पौत्रांश्च जित्वा सर्वाञ्जिता वयम् ॥ ०११ ॥

अनर्थो ह्यर्थसङ्काशस्तथार्थोऽनर्थदर्शनः ।
जयोऽयमजयाकारो जयस्तस्मात्पराजयः ॥ ०१२ ॥

यं जित्वा तप्यते पश्चादापन्न इव दुर्मतिः ।
कथं मन्येत विजयं ततो जिततरः परैः ॥ ०१३ ॥

येषामर्थाय पापस्य धिग्जयस्य सुहृद्वधे ।
निर्जितैरप्रमत्तैर्हि विजिता जितकाशिनः ॥ ०१४ ॥

कर्णिनालीकदंष्ट्रस्य खड्गजिह्वस्य संयुगे ।
चापव्यात्तस्य रौद्रस्य ज्यातलस्वननादिनः ॥ ०१५ ॥

क्रुद्धस्य नरसिंहस्य सङ्ग्रामेष्वपलायिनः ।
ये व्यमुच्यन्त कर्णस्य प्रमादात्त इमे हताः ॥ ०१६ ॥

रथह्रदं शरवर्षोर्मिमन्तं ; रत्नाचितं वाहनराजियुक्तम् ।

शक्त्यृष्टिमीनध्वजनागनक्रं ; शरासनावर्तमहेषुफेनम्  ॥ ०१७  ॥

सङ्ग्रामचन्द्रोदयवेगवेलं ; द्रोणार्णवं ज्यातलनेमिघोषम् ।
ये तेरुरुच्चावचशस्त्रनौभि ;स्ते राजपुत्रा निहताः प्रमादात्  ॥ ०१८  ॥

न हि प्रमादात्परमोऽस्ति कश्चि ;द्वधो नराणामिह जीवलोके ।
प्रमत्तमर्था हि नरं समन्ता ;त्त्यजन्त्यनर्थाश्च समाविशन्ति  ॥ ०१९  ॥

ध्वजोत्तमाग्रोच्छ्रितधूमकेतुं ; शरार्चिषं कोपमहासमीरम् ।
महाधनुर्ज्यातलनेमिघोषं ; तनुत्रनानाविधशस्त्रहोमम्  ॥ ०२०  ॥

महाचमूकक्षवराभिपन्नं ; महाहवे भीष्ममहादवाग्निम् ।
ये सेहुरात्तायतशस्त्रवेगं ; ते राजपुत्रा निहताः प्रमादात्  ॥ ०२१  ॥

न हि प्रमत्तेन नरेण लभ्या ; विद्या तपः श्रीर्विपुलं यशो वा ।
पश्याप्रमादेन निहत्य शत्रू ;न्सर्वान्महेन्द्रं सुखमेधमानम्  ॥ ०२२  ॥

इन्द्रोपमान्पार्थिवपुत्रपौत्रा ;न्पश्याविशेषेण हतान्प्रमादात् ।
तीर्त्वा समुद्रं वणिजः समृद्धाः ; सन्नाः कुनद्यामिव हेलमानाः  ॥ ०२३  ॥

अमर्षितैर्ये निहताः शयाना ; निःसंशयं ते त्रिदिवं प्रपन्नाः  ॥ ०२३  ॥

कृष्णां नु शोचामि कथं न साध्वीं ; शोकार्णवे साद्य विनङ्क्ष्यतीति ।
भ्रातॄंश्च पुत्रांश्च हतान्निशम्य ; पाञ्चालराजं पितरं च वृद्धम्  ॥ ०२४  ॥

ध्रुवं विसञ्ज्ञा पतिता पृथिव्यां ; सा शेष्यते शोककृशाङ्गयष्टिः  ॥ ०२४  ॥

तच्छोकजं दुःखमपारयन्ती ; कथं भविष्यत्युचिता सुखानाम् ।
पुत्रक्षयभ्रातृवधप्रणुन्ना ; प्रदह्यमानेव हुताशनेन  ॥ ०२५  ॥

इत्येवमार्तः परिदेवयन्स ; राजा कुरूणां नकुलं बभाषे ।

गच्छानयैनामिह मन्दभाग्यां ; समातृपक्षामिति राजपुत्रीम्  ॥ ०२६  ॥

माद्रीसुतस्तत्परिगृह्य वाक्यं ; धर्मेण धर्मप्रतिमस्य राज्ञः ।
ययौ रथेनालयमाशु देव्याः ; पाञ्चालराजस्य च यत्र दाराः  ॥ ०२७  ॥

प्रस्थाप्य माद्रीसुतमाजमीढः ; शोकार्दितस्तैः सहितः सुहृद्भिः ।
रोरूयमाणः प्रययौ सुताना ;मायोधनं भूतगणानुकीर्णम्  ॥ ०२८  ॥

स तत्प्रविश्याशिवमुग्ररूपं ; ददर्श पुत्रान्सुहृदः सखींश्च ।
भूमौ शयानान्रुधिरार्द्रगात्रा ;न्विभिन्नभग्नापहृतोत्तमाङ्गान्  ॥ ०२९  ॥

स तांस्तु दृष्ट्वा भृशमार्तरूपो ; युधिष्ठिरो धर्मभृतां वरिष्ठः ।
उच्चैः प्रचुक्रोश च कौरवाग्र्यः ; पपात चोर्व्यां सगणो विसञ्ज्ञः  ॥ ०३०  ॥

---

# द्रौपदीपरिदेवितम्

## अध्याय ०११

वैशंपायन उवाच  ॥

स दृष्ट्वा निहतान्संख्ये पुत्रान्भ्रातृन्सखींस्तथा ।
महादुःखपरीतात्मा बभूव जनमेजय  ॥ ००१  ॥

ततस्तस्य महाञ्शोकः प्रादुरासीन्महात्मनः ।
स्मरतः पुत्रपौत्राणां भ्रातृणां स्वजनस्य ह  ॥ ००२  ॥

तमश्रुपरिपूर्णाक्षं वेपमानमचेतसम् ।

सुहृदो भृशसंविग्नाः सान्त्वयां चक्रिरे तदा ॥ ००३ ॥

ततस्तस्मिन्क्षणे काल्ये रथेनादित्यवर्चसा ।
नकुलः कृष्णया सार्धमुपायात्परमार्तया ॥ ००४ ॥

उपप्लव्यगता सा तु श्रुत्वा सुमहदप्रियम् ।
तदा विनाशं पुत्राणां सर्वेषां व्यथिताभवत् ॥ ००५ ॥

कम्पमानेव कदली वातेनाभिसमीरिता ।
कृष्णा राजानमासाद्य शोकार्ता न्यपतद्भुवि ॥ ००६ ॥

बभूव वदनं तस्याः सहसा शोककर्शितम् ।
फुल्लपद्मपलाशाक्ष्यास्तमोध्वस्त इवांशुमान् ॥ ००७ ॥

ततस्तां पतितां दृष्ट्वा संरम्भी सत्यविक्रमः ।
बाहुभ्यां परिजग्राह समुपेत्य वृकोदरः ॥ ००८ ॥

सा समाश्वासिता तेन भीमसेनेन भामिनी ।
रुदती पाण्डवं कृष्णा सहभ्रातरमब्रवीत् ॥ ००९ ॥

दिष्ट्या राजंस्त्वमद्येमामखिलां भोक्ष्यसे महीम् ।
आत्मजान्क्षत्रधर्मेण संप्रदाय यमाय वै ॥ ०१० ॥

दिष्ट्या त्वं पार्थ कुशली मत्तमातङ्गगामिनम् ।
अवाप्य पृथिवीं कृत्स्नां सौभद्रं न स्मरिष्यसि ॥ ०११ ॥

आत्मजांस्तेन धर्मेण श्रुत्वा शूरान्निपातितान् ।
उपप्लव्ये मया सार्धं दिष्ट्या त्वं न स्मरिष्यसि ॥ ०१२ ॥

प्रसुप्तानां वधं श्रुत्वा द्रौणिना पापकर्मणा ।
शोकस्तपति मां पार्थ हुताशन इवाशयम् ॥ ०१३ ॥

तस्य पापकृतो द्रौणेर्न चेदद्य त्वया मृधे ।
ह्रियते सानुबन्धस्य युधि विक्रम्य जीवितम् ॥ ०१४ ॥

इहैव प्रायमासिष्ये तन्निबोधत पाण्डवाः ।
न चेत्फलमवाप्नोति द्रौणिः पापस्य कर्मणः ॥ ०१५ ॥

एवमुक्त्वा ततः कृष्णा पाण्डवं प्रत्युपाविशत् ।
युधिष्ठिरं याज्ञसेनी धर्मराजं यशस्विनी ॥ ०१६ ॥

दृष्ट्वोपविष्टां राजर्षिः पाण्डवो महिषीं प्रियाम् ।
प्रत्युवाच स धर्मात्मा द्रौपदीं चारुदर्शनाम् ॥ ०१७ ॥

धर्म्यं धर्मेण धर्मज्ञे प्राप्तास्ते निधनं शुभे ।
पुत्रास्ते भ्रातरश्चैव तान्न शोचितुमर्हसि ॥ ०१८ ॥

द्रोणपुत्रः स कल्याणि वनं दूरमितो गतः ।
तस्य त्वं पातनं संख्ये कथं ज्ञास्यसि शोभने ॥ ०१९ ॥

द्रौपद्युवाच ॥

द्रोणपुत्रस्य सहजो मणिः शिरसि मे श्रुतः ।
निहत्य संख्ये तं पापं पश्येयं मणिमाहृतम् ॥ ०२० ॥

राजञ्शिरसि तं कृत्वा जीवेयमिति मे मतिः ॥ ०२० ॥

वैशंपायन उवाच ॥

इत्युक्त्वा पाण्डवं कृष्णा राजानं चारुदर्शना ।
भीमसेनमथाभ्येत्य कुपिता वाक्यमब्रवीत् ॥ ०२१ ॥

त्रातुमर्हसि मां भीम क्षत्रधर्ममनुस्मरन् ।
जहि तं पापकर्माणं शम्बरं मघवानिव ॥ ०२२ ॥

न हि ते विक्रमे तुल्यः पुमानस्तीह कश्चन ॥ ०२२ ॥

श्रुतं तत्सर्वलोकेषु परमव्यसने यथा ।
द्वीपोऽभूस्त्वं हि पार्थानां नगरे वारणावते ॥ ०२३ ॥

हिडिम्बदर्शने चैव तथा त्वमभवो गतिः ॥ ०२३ ॥

तथा विराटनगरे कीचकेन भृशार्दिताम् ।
मामप्युद्धृतवान्कृच्छ्रात्पौलोमीं मघवानिव ॥ ०२४ ॥

यथैतान्यकृथाः पार्थ महाकर्माणि वै पुरा ।
तथा द्रौणिममित्रघ्न विनिहत्य सुखी भव ॥ ०२५ ॥

तस्या बहुविधं दुःखान्निशम्य परिदेवितम् ।
नामर्षयत कौन्तेयो भीमसेनो महाबलः ॥ ०२६ ॥

स काञ्चनविचित्राङ्गमारुरोह महारथम् ।
आदाय रुचिरं चित्रं समार्गणगुणं धनुः ॥ ०२७ ॥

नकुलं सारथिं कृत्वा द्रोणपुत्रवधे वृतः ।
विस्फार्य सशरं चापं तूर्णमश्वानचोदयत् ॥ ०२८ ॥

ते हयाः पुरुषव्याघ्र चोदिता वातरंहसः ।
वेगेन त्वरिता जग्मुर्हरयः शीघ्रगामिनः ॥ ०२९ ॥

शिबिरात्स्वाद्गृहीत्वा स रथस्य पदमच्युतः ।
द्रोणपुत्ररथस्याशु ययौ मार्गेण वीर्यवान् ॥ ०३० ॥

# अध्याय ०१२

वैशंपायन उवाच ॥

तस्मिन्प्रयाते दुर्धर्षे यदूनामृषभस्ततः ।
अब्रवीत्पुण्डरीकाक्षः कुन्तीपुत्रं युधिष्ठिरम् ॥ ००१ ॥

एष पाण्डव ते भ्राता पुत्रशोकमपारयन् ।
जिघांसुर्द्रौणिमाक्रन्दे याति भारत भारतः ॥ ००२ ॥

भीमः प्रियस्ते सर्वेभ्यो भ्रातृभ्यो भरतर्षभ ।
तं कृच्छ्रगतमद्य त्वं कस्मान्नाभ्यवपद्यसे ॥ ००३ ॥

यत्तदाचष्ट पुत्राय द्रोणः परपुरञ्जयः ।
अस्त्रं ब्रह्मशिरो नाम दहेद्यत्पृथिवीमपि ॥ ००४ ॥

तन्महात्मा महाभागः केतुः सर्वधनुष्मताम् ।
प्रत्यपादयदाचार्यः प्रीयमाणो धनञ्जयम् ॥ ००५ ॥

तत्पुत्रोऽस्यैवमेवैनमन्वयाचदमर्षणः ।
ततः प्रोवाच पुत्राय नातिहृष्टमना इव ॥ ००६ ॥

विदितं चापलं ह्यासीदात्मजस्य महात्मनः ।
सर्वधर्मविदाचार्यो नान्विषत्सततं सुतम् ॥ ००७ ॥

परमापद्गतेनापि न स्म तात त्वया रणे ।
इदमस्त्रं प्रयोक्तव्यं मानुषेषु विशेषतः ॥ ००८ ॥

इत्युक्तवान्गुरुः पुत्रं द्रोणः पश्चादथोक्तवान् ।
न त्वं जातु सतां मार्गे स्थातेति पुरुषर्षभ ॥ ००९ ॥

स तदाज्ञाय दुष्टात्मा पितुर्वचनमप्रियम् ।
निराशः सर्वकल्याणैः शोचन्पर्यपतन्महीम् ॥ ०१० ॥

ततस्तदा कुरुश्रेष्ठ वनस्थे त्वयि भारत ।
अवसद्द्वारकामेत्य वृष्णिभिः परमार्चितः ॥ ०११ ॥

स कदाचित्समुद्रान्ते वसन्द्वारवतीमनु ।
एक एकं समागम्य मामुवाच हसन्निव ॥ ०१२ ॥

यत्तदुग्रं तपः कृष्ण चरन्सत्यपराक्रमः ।
अगस्त्याद्भारताचार्यः प्रत्यपद्यत मे पिता ॥ ०१३ ॥

अस्त्रं ब्रह्मशिरो नाम देवगन्धर्वपूजितम् ।
तदद्य मयि दाशार्ह यथा पितरि मे तथा ॥ ०१४ ॥

अस्मत्तस्तदुपादाय दिव्यमस्त्रं यदूत्तम ।
ममाप्यस्त्रं प्रयच्छ त्वं चक्रं रिपुहरं रणे ॥ ०१५ ॥

स राजन्प्रीयमाणेन मयाप्युक्तः कृताञ्जलिः ।
याचमानः प्रयत्नेन मत्तोऽस्त्रं भरतर्षभ ॥ ०१६ ॥

देवदानवगन्धर्वमनुष्यपतगोरगाः ।
न समा मम वीर्यस्य शतांशेनापि पिण्डिताः ॥ ०१७ ॥

इदं धनुरियं शक्तिरिदं चक्रमियं गदा ।
यद्यदिच्छसि चेदस्त्रं मत्तस्तत्तद्ददानि ते ॥ ०१८ ॥

यच्छक्नोषि समुद्यन्तुं प्रयोक्तुमपि वा रणे ।

तद्गृहाण विनास्त्रेण यन्मे दातुमभीप्ससि ॥ ०१९ ॥

स सुनाभं सहस्त्रारं वज्रनाभमयस्मयम् ।
वव्रे चक्रं महाबाहो स्पर्धमानो मया सह ॥ ०२० ॥

गृहाण चक्रमित्युक्तो मया तु तदनन्तरम् ।
जग्राहोपेत्य सहसा चक्रं सव्येन पाणिना ॥ ०२१ ॥

न चैतदशकत्स्थानात्सञ्चालयितुमच्युत ॥ ०२१ ॥

अथ तद्दक्षिणेनापि ग्रहीतुमुपचक्रमे ।
सर्वयत्नेन तेनापि गृह्णन्नेतदकल्पयत् ॥ ०२२ ॥

ततः सर्वबलेनापि यच्चैतन्न शशाक सः ।
उद्धर्तुं वा चालयितुं द्रौणिः परमदुर्मनाः ॥ ०२३ ॥

कृत्वा यत्नं परं श्रान्तः स न्यवर्तत भारत ॥ ०२३ ॥

निवृत्तमथ तं तस्मादभिप्रायाद्विचेतसम् ।
अहमामन्त्र्य सुस्निग्धमश्वत्थामानमब्रुवम् ॥ ०२४ ॥

यः स देवमनुष्येषु प्रमाणं परमं गतः ।
गाण्डीवधन्वा श्वेताश्वः कपिप्रवरकेतनः ॥ ०२५ ॥

यः साक्षाद्देवदेवेशं शितिकण्ठमुमापतिम् ।
द्वंद्वयुद्धे पराजिष्णुस्तोषयामास शङ्करम् ॥ ०२६ ॥

यस्मात्प्रियतरो नास्ति ममान्यः पुरुषो भुवि ।
नादेयं यस्य मे किञ्चिदपि दाराः सुतास्तथा ॥ ०२७ ॥

तेनापि सुहृदा ब्रह्मन्पार्थेनाक्लिष्टकर्मणा ।

नोक्तपुर्वमिदं वाक्यं यत्त्वं मामभिभाषसे ॥ ०२८ ॥

ब्रह्मचर्यं महद्घोरं चीर्त्वा द्वादशवार्षिकम् ।
हिमवत्पार्श्वमभ्येत्य यो मया तपसार्चितः ॥ ०२९ ॥

समानव्रतचारिण्यां रुक्मिण्यां योऽन्वजायत ।
सनत्कुमारस्तेजस्वी प्रद्युम्नो नाम मे सुतः ॥ ०३० ॥

तेनाप्येतन्महद्दिव्यं चक्रमप्रतिमं मम ।
न प्रार्थितमभून्मूढ यदिदं प्रार्थितं त्वया ॥ ०३१ ॥

रामेणातिबलेनैतन्नोक्तपूर्वं कदाचन ।
न गदेन न साम्बेन यदिदं प्रार्थितं त्वया ॥ ०३२ ॥

द्वारकावासिभिश्चान्यैर्वृष्ण्यन्धकमहारथैः ।
नोक्तपूर्वमिदं जातु यदिदं प्रार्थितं त्वया ॥ ०३३ ॥

भारताचार्यपुत्रः सन्मानितः सर्वयादवैः ।
चक्रेण रथिनां श्रेष्ठ किं नु तात युयुत्ससे ॥ ०३४ ॥

एवमुक्तो मया द्रौणिर्मामिदं प्रत्युवाच ह ।
प्रयुज्य भवते पूजां योत्स्ये कृष्ण त्वयेत्युत ॥ ०३५ ॥

ततस्ते प्रार्थितं चक्रं देवदानवपूजितम् ।
अजेयः स्यामिति विभो सत्यमेतद्ब्रवीमि ते ॥ ०३६ ॥

त्वत्तोऽहं दुर्लभं काममनवाप्यैव केशव ।
प्रतियास्यामि गोविन्द शिवेनाभिवदस्व माम् ॥ ०३७ ॥

एतत्सुनाभं वृष्णीनामृषभेण त्वया धृतम् ।
चक्रमप्रतिचक्रेण भुवि नान्योऽभिपद्यते ॥ ०३८ ॥

एतावदुक्त्वा द्रौणिर्मां युग्यमश्वान्धनानि च ।
आदायोपययौ बालो रत्नानि विविधानि च ॥ ०३९ ॥

स संरम्भी दुरात्मा च चपलः क्रूर एव च ।
वेद चास्त्रं ब्रह्मशिरस्तस्माद्रक्ष्यो वृकोदरः ॥ ०४० ॥

---

# ऐषीकोत्सर्गः

## अध्याय ०१३

वैशंपायन उवाच ॥

एवमुक्त्वा युधां श्रेष्ठः सर्वयादवनन्दनः ।
सर्वायुधवरोपेतमारुरोह महारथम् ॥ ००१ ॥

युक्तं परमकाम्बोजैस्तुरगैर्हेममालिभिः ॥ ००१ ॥

आदित्योदयवर्णस्य धुरं रथवरस्य तु ।
दक्षिणामवहत्सैन्यः सुग्रीवः सव्यतोऽवहत् ॥ ००२ ॥

पार्ष्णिवाहौ तु तस्यास्तां मेघपुष्पबलाहकौ ॥ ००२ ॥

विश्वकर्मकृता दिव्या नानारत्नविभूषिता ।
उच्छ्रितेव रथे माया ध्वजयष्टिरदृश्यत ॥ ००३ ॥

वैनतेयः स्थितस्तस्यां प्रभामण्डलरश्मिवान् ।

तस्य सत्यवतः केतुर्भुजगारिरदृश्यत ॥ ००४ ॥

अन्वारोहद्धृषीकेशः केतुः सर्वधनुष्मताम् ।
अर्जुनः सत्यकर्मा च कुरुराजो युधिष्ठिरः ॥ ००५ ॥

अशोभेतां महात्मानौ दाशार्हमभितः स्थितौ ।
रथस्थं शार्ङ्गधन्वानमश्विनाविव वासवम् ॥ ००६ ॥

तावुपारोप्य दाशार्हः स्यन्दनं लोकपूजितम् ।
प्रतोदेन जवोपेतान्परमाश्वानचोदयत् ॥ ००७ ॥

ते हयाः सहसोत्पेतुर्गृहीत्वा स्यन्दनोत्तमम् ।
आस्थितं पाण्डवेयाभ्यां यदूनामृषभेण च ॥ ००८ ॥

वहतां शार्ङ्गधन्वानमश्वानां शीघ्रगामिनाम् ।
प्रादुरासीन्महाञ्शब्दः पक्षिणां पततामिव ॥ ००९ ॥

ते समार्छन्नरव्याघ्राः क्षणेन भरतर्षभ ।
भीमसेनं महेष्वासं समनुद्रुत्य वेगिताः ॥ ०१० ॥

क्रोधदीप्तं तु कौन्तेयं द्विषदर्थे समुद्यतम् ।
नाशक्नुवन्वारयितुं समेत्यापि महारथाः ॥ ०११ ॥

स तेषां प्रेक्षतामेव श्रीमतां दृढधन्विनाम् ।
ययौ भागिरथीकच्छं हरिभिर्भृशवेगितैः ॥ ०१२ ॥

यत्र स्म श्रूयते द्रौणिः पुत्रहन्ता महात्मनाम् ॥ ०१२ ॥

स ददर्श महात्मानमुदकान्ते यशस्विनम् ।
कृष्णद्वैपायनं व्यासमासीनमृषिभिः सह ॥ ०१३ ॥

तं चैव क्रूरकर्माणं घृताक्तं कुशचीरिणम् ।
रजसा ध्वस्तकेशान्तं ददर्श द्रौणिमन्तिके ॥ ०१४ ॥

तमभ्यधावत्कौन्तेयः प्रगृह्य सशरं धनुः ।
भीमसेनो महाबाहुस्तिष्ठ तिष्ठेति चाब्रवीत् ॥ ०१५ ॥

स दृष्ट्वा भीमधन्वानं प्रगृहीतशरासनम् ।
भ्रातरौ पृष्ठतश्चास्य जनार्दनरथे स्थितौ ॥ ०१६ ॥

व्यथितात्माभवद्द्रौणिः प्राप्तं चेदममन्यत ॥ ०१६ ॥

स तद्दिव्यमदीनात्मा परमास्त्रमचिन्तयत् ।
जग्राह च स चैषीकां द्रौणिः सव्येन पाणिना ॥ ०१७ ॥

स तामापदमासाद्य दिव्यमस्त्रमुदीरयत् ॥ ०१७ ॥

अमृष्यमाणस्ताञ्शूरान्दिव्यायुधधरान्स्थितान् ।
अपाण्डवायेति रुषा व्यसृजद्दारुणं वचः ॥ ०१८ ॥

इत्युक्त्वा राजशार्दूल द्रोणपुत्रः प्रतापवान् ।
सर्वलोकप्रमोहार्थं तदस्त्रं प्रमुमोच ह ॥ ०१९ ॥

ततस्तस्यामिषीकायां पावकः समजायत ।
प्रधक्ष्यन्निव लोकांस्त्रीन्कालान्तकयमोपमः ॥ ०२० ॥

---

# अध्याय ०१४

वैशंपायन उवाच ॥

इङ्गितेनैव दाशार्हस्तमभिप्रायमादितः ।
द्रौणेर्बुद्ध्वा महाबाहुरर्जुनं प्रत्यभाषत ॥ ००१ ॥

अर्जुनार्जुन यद्दिव्यमस्त्रं ते हृदि वर्तते ।
द्रोणोपदिष्टं तस्यायं कालः संप्रति पाण्डव ॥ ००२ ॥

भ्रातॄणामात्मनश्चैव परित्राणाय भारत ।
विसृजैतत्त्वमप्याजावस्त्रमस्त्रनिवारणम् ॥ ००३ ॥

केशवेनैवमुक्तस्तु पाण्डवः परवीरहा ।
अवातरद्रथात्तूर्णं प्रगृह्य सशरं धनुः ॥ ००४ ॥

पूर्वमाचार्यपुत्राय ततोऽनन्तरमात्मने ।
भ्रातृभ्यश्चैव सर्वेभ्यः स्वस्तीत्युक्त्वा परंतपः ॥ ००५ ॥

देवताभ्यो नमस्कृत्य गुरुभ्यश्चैव सर्वशः ।
उत्ससर्ज शिवं ध्यायन्नस्त्रमस्त्रेण शाम्यताम् ॥ ००६ ॥

ततस्तदस्त्रं सहसा सृष्टं गाण्डीवधन्वना ।
प्रजज्वाल महार्चिष्मद्युगान्तानलसंनिभम् ॥ ००७ ॥

तथैव द्रोणपुत्रस्य तदस्त्रं तिग्मतेजसः ।
प्रजज्वाल महाज्वालं तेजोमण्डलसंवृतम् ॥ ००८ ॥

निर्घाता बहवश्चासन्पेतुरुल्काः सहस्रशः ।
महद्भयं च भूतानां सर्वेषां समजायत ॥ ००९ ॥

सशब्दमभवद्व्योम ज्वालामालाकुलं भृशम् ।
चचाल च मही कृत्स्ना सपर्वतवनद्रुमा ॥ ०१० ॥

ते अस्त्रे तेजसा लोकांस्तापयन्ती व्यवस्थिते ।
महर्षी सहितौ तत्र दर्शयामासतुस्तदा ॥ ०११ ॥

नारदः स च धर्मात्मा भरतानां पितामहः ।
उभौ शमयितुं वीरौ भारद्वाजधनञ्जयौ ॥ ०१२ ॥

तौ मुनी सर्वधर्मज्ञौ सर्वभूतहितैषिणौ ।
दीप्तयोरस्त्रयोर्मध्ये स्थितौ परमतेजसौ ॥ ०१३ ॥

तदन्तरमनाधृष्यावुपगम्य यशस्विनौ ।
आस्तामृषिवरौ तत्र ज्वलिताविव पावकौ ॥ ०१४ ॥

प्राणभृद्भिरनाधृष्यौ देवदानवसंमतौ ।
अस्त्रतेजः शमयितुं लोकानां हितकाम्यया ॥ ०१५ ॥

ऋषी ऊचतुः ॥

नानाशस्त्रविदः पूर्वे येऽप्यतीता महारथाः ।
नैतदस्त्रं मनुष्येषु तैः प्रयुक्तं कथञ्चन ॥ ०१६ ॥

---

# अध्याय ०१५

वैशंपायन उवाच ॥

दृष्ट्वैव नरशार्दूलस्तावग्निसमतेजसौ ।
सञ्जहार शरं दिव्यं त्वरमाणो धनञ्जयः ॥ ००१ ॥

उवाच वदतां श्रेष्ठस्तावृषी प्राञ्जलिस्तदा ।

प्रयुक्तमस्त्रमस्त्रेण शाम्यतामिति वै मया ॥ ००२ ॥

संहृते परमास्त्रेऽस्मिन्सर्वानस्मानशेषतः ।
पापकर्मा ध्रुवं द्रौणिः प्रधक्ष्यत्यस्त्रतेजसा ॥ ००३ ॥

अत्र यद्धितमस्माकं लोकानां चैव सर्वथा ।
भवन्तौ देवसङ्काशौ तथा संहर्तुमर्हतः ॥ ००४ ॥

इत्युक्त्वा सञ्जहारास्त्रं पुनरेव धनञ्जयः ।
संहारो दुष्करस्तस्य देवैरपि हि संयुगे ॥ ००५ ॥

विसृष्टस्य रणे तस्य परमास्त्रस्य सङ्ग्रहे ।
न शक्तः पाण्डवादन्यः साक्षादपि शतक्रतुः ॥ ००६ ॥

ब्रह्मतेजोभवं तद्धि विसृष्टमकृतात्मना ।
न शक्यमावर्तयितुं ब्रह्मचारिव्रतादृते ॥ ००७ ॥

अचीर्णब्रह्मचर्यो यः सृष्ट्वावर्तयते पुनः ।
तदस्त्रं सानुबन्धस्य मूर्धानं तस्य कृन्तति ॥ ००८ ॥

ब्रह्मचारी व्रती चापि दुरवापमवाप्य तत् ।
परमव्यसनार्तोऽपि नार्जुनोऽस्त्रं व्यमुञ्चत ॥ ००९ ॥

सत्यव्रतधरः शूरो ब्रह्मचारी च पाण्डवः ।
गुरुवर्ती च तेनास्त्रं सञ्जहारार्जुनः पुनः ॥ ०१० ॥

द्रौणिरप्यथ संप्रेक्ष्य तावृषी पुरतः स्थितौ ।
न शशाक पुनर्घोरमस्त्रं संहर्तुमाहवे ॥ ०११ ॥

अशक्तः प्रतिसंहारे परमास्त्रस्य संयुगे ।
द्रौणिर्दीनमना राजन्द्वैपायनमभाषत ॥ ०१२ ॥

उत्तमव्यसनार्तेन प्राणत्राणमभीप्सुना ।
मयैतदस्त्रमुत्सृष्टं भीमसेनभयान्मुने  ॥ ०१३  ॥

अधर्मश्च कृतोऽनेन धार्तराष्ट्रं जिघांसता ।
मिथ्याचारेण भगवन्भीमसेनेन संयुगे  ॥ ०१४  ॥

अतः सृष्टमिदं ब्रह्मन्मयास्त्रमकृतात्मना ।
तस्य भूयोऽद्य संहारं कर्तुं नाहमिहोत्सहे  ॥ ०१५  ॥

विसृष्टं हि मया दिव्यमेतदस्त्रं दुरासदम् ।
अपाण्डवायेति मुने वह्नितेजोऽनुमन्त्र्य वै  ॥ ०१६  ॥

तदिदं पाण्डवेयानामन्तकायाभिसंहितम् ।
अद्य पाण्डुसुतान्सर्वाञ्जीविताद्भ्रंशयिष्यति  ॥ ०१७  ॥

कृतं पापमिदं ब्रह्मन्रोषाविष्टेन चेतसा ।
वधमाशास्य पार्थानां मयास्त्रं सृजता रणे  ॥ ०१८  ॥

व्यास उवाच  ॥

अस्त्रं ब्रह्मशिरस्तात विद्वान्पार्थो धनञ्जयः ।
उत्सृष्टवान्न रोषेण न वधाय तवाहवे  ॥ ०१९  ॥

अस्त्रमस्त्रेण तु रणे तव संशमयिष्यता ।
विसृष्टमर्जुनेनेदं पुनश्च प्रतिसंहृतम्  ॥ ०२०  ॥

ब्रह्मास्त्रमप्यवाप्यैतदुपदेशात्पितुस्तव ।
क्षत्रधर्मान्महाबाहुर्नाकम्पत धनञ्जयः  ॥ ०२१  ॥

एवं धृतिमतः साधोः सर्वास्त्रविदुषः सतः ।

सभ्रातृबन्धोः कस्मात्त्वं वधमस्य चिकीर्षसि ॥ ०२२ ॥

अस्त्रं ब्रह्मशिरो यत्र परमास्त्रेण वध्यते ।
समा द्वादश पर्जन्यस्तद्राष्ट्रं नाभिवर्षति ॥ ०२३ ॥

एतदर्थं महाबाहुः शक्तिमानपि पाण्डवः ।
न विहन्त्येतदस्त्रं ते प्रजाहितचिकीर्षया ॥ ०२४ ॥

पाण्डवास्त्वं च राष्ट्रं च सदा संरक्ष्यमेव नः ।
तस्मात्संहर दिव्यं त्वमस्त्रमेतन्महाभुज ॥ ०२५ ॥

अरोषस्तव चैवास्तु पार्थाः सन्तु निरामयाः ।
न ह्यधर्मेण राजर्षिः पाण्डवो जेतुमिच्छति ॥ ०२६ ॥

मणिं चैतं प्रयच्छैभ्यो यस्ते शिरसि तिष्ठति ।
एतदादाय ते प्राणान्प्रतिदास्यन्ति पाण्डवाः ॥ ०२७ ॥

द्रौणिरुवाच ॥

पाण्डवैर्यानि रत्नानि यच्चान्यत्कौरवैर्धनम् ।
अवाप्तानीह तेभ्योऽयं मणिर्मम विशिष्यते ॥ ०२८ ॥

यमाबध्य भयं नास्ति शस्त्रव्याधिक्षुधाश्रयम् ।
देवेभ्यो दानवेभ्यो वा नागेभ्यो वा कथञ्चन ॥ ०२९ ॥

न च रक्षोगणभयं न तस्करभयं तथा ।
एवंवीर्यो मणिरयं न मे त्याज्यः कथञ्चन ॥ ०३० ॥

यत्तु मे भगवानाह तन्मे कार्यमनन्तरम् ।
अयं मणिरयं चाहमिषीका निपतिष्यति ॥ ०३१ ॥

गर्भेषु पाण्डवेयानाममोघं चैतदुद्यतम् ॥ ०३१ ॥

व्यास उवाच ॥

एवं कुरु न चान्या ते बुद्धिः कार्या कदाचन ।
गर्भेषु पाण्डवेयानां विसृज्यैतदुपारम ॥ ०३२ ॥

वैशंपायन उवाच ॥

ततः परममस्त्रं तदश्वत्थामा भृशातुरः ।
द्वैपायनवचः श्रुत्वा गर्भेषु प्रमुमोच ह ॥ ०३३ ॥

---

# द्रौपदीप्रसादः

## अध्याय ०१६

वैशंपायन उवाच ॥

तदाज्ञाय हृषीकेशो विसृष्टं पापकर्मणा ।
हृष्यमाण इदं वाक्यं द्रौणिं प्रत्यब्रवीत्तदा ॥ ००१ ॥

विराटस्य सुतां पूर्वं स्नुषां गाण्डीवधन्वनः ।
उपप्लव्यगतां दृष्ट्वा व्रतवान्ब्राह्मणोऽब्रवीत् ॥ ००२ ॥

परिक्षीणेषु कुरुषु पुत्रस्तव जनिष्यति ।
एतदस्य परिक्षित्त्वं गर्भस्थस्य भविष्यति ॥ ००३ ॥

तस्य तद्वचनं साधोः सत्यमेव भविष्यति ।
परिक्षिद्भविता ह्येषां पुनर्वंशकरः सुतः ॥ ००४ ॥

एवं ब्रुवाणं गोविन्दं सात्वतप्रवरं तदा ।
द्रौणिः परमसंरब्धः प्रत्युवाचेदमुत्तरम् ॥ ००५ ॥

नैतदेवं यथात्थ त्वं पक्षपातेन केशव ।
वचनं पुण्डरीकाक्ष न च मद्वाक्यमन्यथा ॥ ००६ ॥

पतिष्यत्येतदस्त्रं हि गर्भे तस्या मयोद्यतम् ।
विराटदुहितुः कृष्ण यां त्वं रक्षितुमिच्छसि ॥ ००७ ॥

वासुदेव उवाच ॥

अमोघः परमास्त्रस्य पातस्तस्य भविष्यति ।
स तु गर्भो मृतो जातो दीर्घमायुरवाप्स्यति ॥ ००८ ॥

त्वां तु कापुरुषं पापं विदुः सर्वे मनीषिणः ।
असकृत्पापकर्माणं बालजीवितघातकम् ॥ ००९ ॥

तस्मात्त्वमस्य पापस्य कर्मणः फलमाप्नुहि ।
त्रीणि वर्षसहस्राणि चरिष्यसि महीमिमाम् ॥ ०१० ॥

अप्राप्नुवन्क्वचित्काञ्चित्संविदं जातु केनचित् ॥ ०१० ॥

निर्जनानसहायस्त्वं देशान्प्रविचरिष्यसि ।
भवित्री न हि ते क्षुद्र जनमध्येषु संस्थितिः ॥ ०११ ॥

पूयशोणितगन्धी च दुर्गकान्तारसंश्रयः ।
विचरिष्यसि पापात्मन्सर्वव्याधिसमन्वितः ॥ ०१२ ॥

वयः प्राप्य परिक्षित्तु वेदव्रतमवाप्य च ।
कृपाच्छारद्वताद्वीरः सर्वास्त्राण्युपलप्स्यते ॥ ०१३ ॥

विदित्वा परमास्त्राणि क्षत्रधर्मव्रते स्थितः ।
षष्टिं वर्षाणि धर्मात्मा वसुधां पालयिष्यति ॥ ०१४ ॥

इतश्चोर्ध्वं महाबाहुः कुरुराजो भविष्यति ।
परिक्षिन्नाम नृपतिर्मिषतस्ते सुदुर्मते ॥ ०१५ ॥

पश्य मे तपसो वीर्यं सत्यस्य च नराधम ॥ ०१५ ॥

व्यास उवाच ॥

यस्मादनादृत्य कृतं त्वयास्मान्कर्म दारुणम् ।
ब्राह्मणस्य सतश्चैव यस्मात्ते वृत्तमीदृशम् ॥ ०१६ ॥

तस्माद्यद्देवकीपुत्र उक्तवानुत्तमं वचः ।
असंशयं ते तद्भावि क्षुद्रकर्मन्व्रजाश्वितः ॥ ०१७ ॥

अश्वत्थामोवाच ॥

सहैव भवता ब्रह्मन्स्थास्यामि पुरुषेष्वहम् ।
सत्यवागस्तु भगवानयं च पुरुषोत्तमः ॥ ०१८ ॥

वैशंपायन उवाच ॥

प्रदायाथ मणिं द्रौणिः पाण्डवानां महात्मनाम् ।
जगाम विमनास्तेषां सर्वेषां पश्यतां वनम् ॥ ०१९ ॥

पाण्डवाश्चापि गोविन्दं पुरस्कृत्य हतद्विषः ।
कृष्णद्वैपायनं चैव नारदं च महामुनिम् ॥ ०२० ॥

द्रोणपुत्रस्य सहजं मणिमादाय सत्वराः ।
द्रौपदीमभ्यधावन्त प्रायोपेतां मनस्विनीम् ॥ ०२१ ॥

ततस्ते पुरुषव्याघ्राः सदश्वैरनिलोपमैः ।
अभ्ययुः सहदाशार्हाः शिबिरं पुनरेव ह ॥ ०२२ ॥

अवतीर्य रथाभ्यां तु त्वरमाणा महारथाः ।
ददृशुर्द्रौपदीं कृष्णामार्तामार्ततराः स्वयम् ॥ ०२३ ॥

तामुपेत्य निरानन्दां दुःखशोकसमन्विताम् ।
परिवार्य व्यतिष्ठन्त पाण्डवाः सहकेशवाः ॥ ०२४ ॥

ततो राज्ञाभ्यनुज्ञातो भीमसेनो महाबलः ।
प्रददौ तु मणिं दिव्यं वचनं चेदमब्रवीत् ॥ ०२५ ॥

अयं भद्रे तव मणिः पुत्रहन्ता जितः स ते ।
उत्तिष्ठ शोकमुत्सृज्य क्षत्रधर्ममनुस्मर ॥ ०२६ ॥

प्रयाणे वासुदेवस्य शमार्थमसितेक्षणे ।
यान्युक्तानि त्वया भीरु वाक्यानि मधुघातिनः ॥ ०२७ ॥

नैव मे पतयः सन्ति न पुत्रा भ्रातरो न च ।
नैव त्वमपि गोविन्द शममिच्छति राजनि ॥ ०२८ ॥

उक्तवत्यसि धीराणि वाक्यानि पुरुषोत्तमम् ।
क्षत्रधर्मानुरूपाणि तानि संस्मर्तुमर्हसि ॥ ०२९ ॥

हतो दुर्योधनः पापो राज्यस्य परिपन्थकः ।
दुःशासनस्य रुधिरं पीतं विस्फुरतो मया ॥ ०३० ॥

वैरस्य गतमानृण्यं न स्म वाच्या विवक्षताम् ।
जित्वा मुक्तो द्रोणपुत्रो ब्राह्मण्याद्गौरवेण च  ॥ ०३१  ॥

यशोऽस्य पातितं देवि शरीरं त्ववशेषितम् ।
वियोजितश्च मणिना न्यासितश्चायुधं भुवि  ॥ ०३२  ॥

द्रौपद्युवाच  ॥

केवलानृण्यमाप्तास्मि गुरुपुत्रो गुरुर्मम ।
शिरस्येतं मणिं राजा प्रतिबध्नातु भारत  ॥ ०३३  ॥

वैशंपायन उवाच  ॥

तं गृहीत्वा ततो राजा शिरस्येवाकरोत्तदा ।
गुरोरुच्छिष्टमित्येव द्रौपद्या वचनादपि  ॥ ०३४  ॥

ततो दिव्यं मणिवरं शिरसा धारयन्प्रभुः ।
शुशुभे स महाराजः सचन्द्र इव पर्वतः  ॥ ०३५  ॥

उत्तस्थौ पुत्रशोकार्ता ततः कृष्णा मनस्विनी ।
कृष्णं चापि महाबाहुं पर्यपृच्छत धर्मराट्  ॥ ०३६  ॥

---

# रुद्रमाहात्म्यम्

## अध्याय ०१७

वैशंपायन उवाच  ॥

हतेषु सर्वसैन्येषु सौप्तिके तै रथैस्त्रिभिः ।
शोचन्युधिष्ठिरो राजा दाशार्हमिदमब्रवीत् ॥ ००१ ॥

कथं नु कृष्ण पापेन क्षुद्रेणाक्लिष्टकर्मणा ।
द्रौणिना निहताः सर्वे मम पुत्रा महारथाः ॥ ००२ ॥

तथा कृतास्त्रा विक्रान्ताः सहस्रशतयोधिनः ।
द्रुपदस्यात्मजाश्चैव द्रोणपुत्रेण पातिताः ॥ ००३ ॥

यस्य द्रोणो महेष्वासो न प्रादादाहवे मुखम् ।
तं जघ्ने रथिनां श्रेष्ठं धृष्टद्युम्नं कथं नु सः ॥ ००४ ॥

किं नु तेन कृतं कर्म तथायुक्तं नरर्षभ ।
यदेकः शिबिरं सर्वमवधीन्नो गुरोः सुतः ॥ ००५ ॥

वासुदेव उवाच ॥

नूनं स देवदेवानामीश्वरेश्वरमव्ययम् ।
जगाम शरणं द्रौणिरेकस्तेनावधीद्बहून् ॥ ००६ ॥

प्रसन्नो हि महादेवो दद्यादमरतामपि ।
वीर्यं च गिरिशो दद्याद्येनेन्द्रमपि शातयेत् ॥ ००७ ॥

वेदाहं हि महादेवं तत्त्वेन भरतर्षभ ।
यानि चास्य पुराणानि कर्माणि विविधान्युत ॥ ००८ ॥

आदिरेष हि भूतानां मध्यमन्तश्च भारत ।
विचेष्टते जगच्चेदं सर्वमस्यैव कर्मणा ॥ ००९ ॥

एवं सिसृक्षुर्भूतानि ददर्श प्रथमं विभुः ।

पितामहोऽब्रवीच्चैनं भूतानि सृज माचिरम्  ॥ ०१० ॥

हरिकेशस्तथेत्युक्त्वा भूतानां दोषदर्शिवान् ।
दीर्घकालं तपस्तेपे मग्नोऽम्भसि महातपाः  ॥ ०११ ॥

सुमहान्तं ततः कालं प्रतीक्ष्यैनं पितामहः ।
स्रष्टारं सर्वभूतानां ससर्ज मनसापरम्  ॥ ०१२ ॥

सोऽब्रवीत्पितरं दृष्ट्वा गिरिशं मग्नमम्भसि ।
यदि मे नाग्रजस्त्वन्यस्ततः स्रक्ष्याम्यहं प्रजाः  ॥ ०१३ ॥

तमब्रवीत्पिता नास्ति त्वदन्यः पुरुषोऽग्रजः ।
स्थाणुरेष जले मग्नो विस्रब्धः कुरु वै कृतिम्  ॥ ०१४ ॥

स भूतान्यसृजत्सप्त दक्षादींस्तु प्रजापतीन् ।
यैरिमं व्यकरोत्सर्वं भूतग्रामं चतुर्विधम्  ॥ ०१५ ॥

ताः सृष्टमात्राः क्षुधिताः प्रजाः सर्वाः प्रजापतिम् ।
बिभक्षयिषवो राजन्सहसा प्राद्रवंस्तदा  ॥ ०१६ ॥

स भक्ष्यमाणस्त्राणार्थी पितामहमुपाद्रवत् ।
आभ्यो मां भगवान्पातु वृत्तिरासां विधीयताम्  ॥ ०१७ ॥

ततस्ताभ्यो ददावन्नमोषधीः स्थावराणि च ।
जङ्गमानि च भूतानि दुर्बलानि बलीयसाम्  ॥ ०१८ ॥

विहितान्नाः प्रजास्तास्तु जग्मुस्तुष्टा यथागतम् ।
ततो ववृधिरे राजन्प्रीतिमत्यः स्वयोनिषु  ॥ ०१९ ॥

भूतग्रामे विवृद्धे तु तुष्टे लोकगुरावपि ।
उदतिष्ठज्जलाज्ज्येष्ठः प्रजाश्चेमा ददर्श सः  ॥ ०२० ॥

बहुरूपाः प्रजा दृष्ट्वा विवृद्धाः स्वेन तेजसा ।
चुक्रोध भगवान्रुद्रो लिङ्गं स्वं चाप्यविध्यत ॥ ०२१ ॥

तत्प्रविद्धं तदा भूमौ तथैव प्रत्यतिष्ठत ।
तमुवाचाव्ययो ब्रह्मा वचोभिः शमयन्निव ॥ ०२२ ॥

किं कृतं सलिले शर्व चिरकालं स्थितेन ते ।
किमर्थं चैतदुत्पाट्य भूमौ लिङ्गं प्रवेरितम् ॥ ०२३ ॥

सोऽब्रवीज्जातसंरम्भस्तदा लोकगुरुर्गुरुम् ।
प्रजाः सृष्टाः परेणेमाः किं करिष्याम्यनेन वै ॥ ०२४ ॥

तपसाधिगतं चान्नं प्रजार्थं मे पितामह ।
ओषध्यः परिवर्तेरन्यथैव सततं प्रजाः ॥ ०२५ ॥

एवमुक्त्वा तु सङ्क्रुद्धो जगाम विमना भवः ।
गिरेर्मुञ्जवतः पादं तपस्तप्तुं महातपाः ॥ ०२६ ॥

---

# अध्याय ०१८

वासुदेव उवाच ॥

ततो देवयुगेऽतीते देवा वै समकल्पयन् ।
यज्ञं वेदप्रमाणेन विधिवद्यष्टुमीप्सवः ॥ ००१ ॥

कल्पयामासुरव्यग्रा देशान्यज्ञोचितांस्ततः ।
भागार्हा देवताश्चैव यज्ञियं द्रव्यमेव च ॥ ००२ ॥

ता वै रुद्रमजानन्त्यो याथातथ्येन देवताः ।
नाकल्पयन्त देवस्य स्थाणोर्भागं नराधिप ॥ ००३ ॥

सोऽकल्प्यमाने भागे तु कृत्तिवासा मखेऽमरैः ।
तरसा भागमन्विच्छन्धनुरादौ ससर्ज ह ॥ ००४ ॥

लोकयज्ञः क्रियायज्ञो गृहयज्ञः सनातनः ।
पञ्चभूतमयो यज्ञो नृयज्ञश्चैव पञ्चमः ॥ ००५ ॥

लोकयज्ञेन यज्ञैषी कपर्दी विदधे धनुः ।
धनुः सृष्टमभूत्तस्य पञ्चकिष्कुप्रमाणतः ॥ ००६ ॥

वषट्कारोऽभवज्ज्या तु धनुषस्तस्य भारत ।
यज्ञाङ्गानि च चत्वारि तस्य संहननेऽभवन् ॥ ००७ ॥

ततः क्रुद्धो महादेवस्तदुपादाय कार्मुकम् ।
आजगामाथ तत्रैव यत्र देवाः समीजिरे ॥ ००८ ॥

तमात्तकार्मुकं दृष्ट्वा ब्रह्मचारिणमव्ययम् ।
विव्यथे पृथिवी देवी पर्वताश्च चकम्पिरे ॥ ००९ ॥

न ववौ पवनश्चैव नाग्निर्जज्वाल चैधितः ।
व्यभ्रमच्चापि संविग्नं दिवि नक्षत्रमण्डलम् ॥ ०१० ॥

न बभौ भास्करश्चापि सोमः श्रीमुक्तमण्डलः ।
तिमिरेणाकुलं सर्वमाकाशं चाभवद्वृतम् ॥ ०११ ॥

अभिभूतास्ततो देवा विषयान्न प्रजज्ञिरे ।
न प्रत्यभाच्च यज्ञस्तान्वेदा बभ्रंशिरे तदा ॥ ०१२ ॥

ततः स यज्ञं रौद्रेण विव्याध हृदि पत्रिणा ।
अपक्रान्तस्ततो यज्ञो मृगो भूत्वा सपावकः ॥ ०१३ ॥

स तु तेनैव रूपेण दिवं प्राप्य व्यरोचत ।
अन्वीयमानो रुद्रेण युधिष्ठिर नभस्तले ॥ ०१४ ॥

अपक्रान्ते ततो यज्ञे सञ्ज्ञा न प्रत्यभात्सुरान् ।
नष्टसञ्ज्ञेषु देवेषु न प्रज्ञायत किञ्चन ॥ ०१५ ॥

त्र्यम्बकः सवितुर्बाहू भगस्य नयने तथा ।
पूष्णश्च दशनान्क्रुद्धो धनुष्कोट्या व्यशातयत् ॥ ०१६ ॥

प्राद्रवन्त ततो देवा यज्ञाङ्गानि च सर्वशः ।
केचित्तत्रैव घूर्णन्तो गतासव इवाभवन् ॥ ०१७ ॥

स तु विद्राव्य तत्सर्वं शितिकण्ठोऽवहस्य च ।
अवष्टभ्य धनुष्कोटिं रुरोध विबुधांस्ततः ॥ ०१८ ॥

ततो वागमरैरुक्ता ज्यां तस्य धनुषोऽच्छिनत् ।
अथ तत्सहसा राजंश्छिन्नज्यं विस्फुरद्धनुः ॥ ०१९ ॥

ततो विधनुषं देवा देवश्रेष्ठमुपागमन् ।
शरणं सह यज्ञेन प्रसादं चाकरोत्प्रभुः ॥ ०२० ॥

ततः प्रसन्नो भगवान्प्रास्यत्कोपं जलाशये ।
स जलं पावको भूत्वा शोषयत्यनिशं प्रभो ॥ ०२१ ॥

भगस्य नयने चैव बाहू च सवितुस्तथा ।
प्रादात्पूष्णश्च दशनान्पुनर्यज्ञं च पाण्डव ॥ ०२२ ॥

ततः सर्वमिदं स्वस्थं बभूव पुनरेव ह ।

सर्वाणि च हवींष्यस्य देवा भागमकल्पयन् ॥ ०२३ ॥

तस्मिन्क्रुद्धेऽभवत्सर्वमस्वस्थं भुवनं विभो ।
प्रसन्ने च पुनः स्वस्थं स प्रसन्नोऽस्य वीर्यवान् ॥ ०२४ ॥

ततस्ते निहताः सर्वे तव पुत्रा महारथाः ।
अन्ये च बहवः शूराः पाञ्चालाश्च सहानुगाः ॥ ०२५ ॥

न तन्मनसि कर्तव्यं न हि तद्द्रौणिना कृतम् ।
महादेवप्रसादः स कुरु कार्यमनन्तरम् ॥ ०२६ ॥

---

Mahabharata
Encoding : ISCII
Electronic text (C) Bhandarkar Oriental Research Institute, Pune, India, 1999
http ://bombay.indology.info/mahabharata/statement.html for further details
Converted for devanagari output using xetex-itrans with sdvn mapping on July 23, 2013